# संस्कृत-व्यंग्यविलासः

(संस्कृतभाषायां विविधविषया व्यंग्यपूर्णा सर्वप्रथमा सचित्रा गद्य-रचना)


व्यंग्यकारः

**डॉ० प्रशस्यमित्रः शास्त्री**

(*साहित्य-अकादमी एवं राष्ट्रपति-सम्मान प्राप्त*)

रायबरेली-(उ०प्र०)






**अक्षयवट प्रकाशन**

**इलाहाबाद**

ISBN 978-93-80634-23-4

संस्कृत-व्यंग्यविलासः

व्यंग्यकारः
डॉ० प्रशस्यमित्रः शास्त्री


प्रथमं संस्करणम् : १९८९
द्वितीयं संस्करणम् : २०१६

मूल्यम् : शतत्रयरूप्यकाणि (तीन सौ रुपये)

प्रकाशकः
अक्षयवट प्रकाशन
२६, बलरामपुर हाउस
इलाहाबाद-२११००२

मुद्रकः
दूबे प्रिन्टर्स एण्ड ग्राफिक्स
५० A, बलरामपुर हाउस
इलाहाबाद-२११००२

# पुरोवाक्

संस्कृतभाषायां हस्य-व्यंग्यलेखनम्प्रायः अत्यल्पमेव वर्त्तते। साम्प्रतं राजनीति-धर्म-सामाजिकसमस्या-शिक्षानीतिप्रभृतिविषयान् अवलम्ब्य सामयिकानि व्यंग्यानि यथा विभिन्नभारतीयभाषाणां पत्र-पत्रिकासु प्रकाश्यन्ते न तथा संस्कृतभाषायां व्यंग्यविधामाश्रित्य सामयिका मनोरञ्जका लेखाः प्रकाश्यन्ते। तत्सर्वं निरीक्ष्यैव मया संस्कृतभाषायां विगतदशवर्षेषु विभिन्नपत्रपत्रिकासु पद्ये गद्ये च प्रायः हास्य-व्यंग्यलेखनमेव उररीकृतम्। परिणामतः १९८४ ईसवीयाब्दे मदीयः एकः हास्यपद्यसंग्रहः 'हासविलासः' इति नाम्ना प्रकाशितः सुधीभिः पाठकैश्च बहुशः समादृतः।

## निबन्धप्रकाशनविचारः

विगतेष्वनेकेषु वर्षेषु मम विभिन्न व्यंग्यनिबन्धाः पारिजातम्-गाण्डीवम्-भारतोदय इत्यादिषु विविधपत्रिकासु नानाविषयमधिकृत्य यथावसरं प्रकाशिता अभवन्। मम तान् निबन्धान् अधीत्य संस्कृतपाठकानां विदुषां च एष आग्रह आसीद् यदेतेषां व्यंग्यनिबन्धानामपि पुस्तकरूपेण प्रकाशनं करणीयं यतोहि इमे निबन्धा सम-सामयिकभारतीय-समाजस्य व्यंग्यमाध्यमेन याथातथ्यं चित्रणमुपस्थापयन्ति। अत एव मया व्यंग्य-निबन्धानां संकलनस्य प्रकाशनाय निश्चयः कृतः। पुनरपि संकलनेऽस्मिन् न केवलं पूर्वप्रकाशिता एव निबन्धा वर्त्तन्ते अपि त्वत्र बहवो निबन्धा एवंविधा अपि वर्त्तन्ते येऽद्यावधि कस्यांचिदपि पत्रिकायां न प्रकाशिताः सन्ति।

## व्यंग्यलेखनस्य प्रेरणा

हिन्दीभाषायाः पत्र-पत्रिकासु मया विभिन्नव्यंग्यलेखकानां तद्यथा–हरिशंकर परसाई, शरद जोशी, रवीन्द्र त्यागी, डॉ० बरसाने लाल चतुर्वेदी–प्रभृतीनां विविध-विषयमधिकृत्य मनोरञ्जका व्यंग्यलेखाः प्रायः पठ्यन्ते स्म। तत्पठित्वा मम मनस्यपि एष विचारः समागतो यत् संस्कृतभाषायामपि कथं न एवंविधा रोचकाः सशक्ताः सामयिकाश्च व्यंग्यनिबन्धा लिख्येरन् यान् अधीत्य पाठकानां मनोरञ्जनं भवतु तेषां चिन्तने च नवीनता समागच्छेत्। इति सर्वं विचार्यैव विगतवर्षेषु व्यंग्यनिबन्धलेखनमस्माभिरारब्धम्। इदमेव कारणं वर्त्तते यद् एतान् मम व्यंग्यनिबन्धान् अधीत्य पाठकाः क्वचिदेवं प्रत्येष्यन्ति यदत्र निबन्ध-संकलने पूर्वोक्तव्यंग्यलेखानां प्रभावच्छाया भावसाम्यं वा वर्त्तते।

लेखनसमये मयाऽनुभूतं यत् पद्यलेखनाऽपेक्षया गद्यलेखनं कठिनतरं भवति। व्यंग्य-पद्ययोजनायां तु केवलमन्तिमचरणे एव हास्योत्पादनं विधाय प्रशंसाश्रेयः समधिगन्तुं शक्यते किन्तु गद्यरचनायाम् आदितः प्रारभ्य

अन्तिमपंक्तिपर्यन्तं मनोरञ्जकतां कुतूहलं चोत्पादयता सावधानमनसा लेखनमावश्यकं भवति येनाऽभिरुचिभङ्गो न प्रकल्पेत। तदर्थं मयाऽत्र पर्याप्तः प्रयासः कृतः। पुनरपि पाठका एवाऽत्र विषयेऽन्तिमं प्रमाणम्।

## रचनाया वैशिष्ट्यम्

वस्तुतः एतेषां व्यंग्य-निबन्धानां लेखने मया कश्चिद् विशिष्टः प्रयासः, अतिशयोक्तिः, अतिकल्पना वा न कृता। सर्वं यथार्थजातं यन्मया दृष्टम्प्राप्तमनुभूतं वा तदेव सर्वं कतिपयैर्वाक्यैः समुपस्थापितम्। किन्तु साम्प्रतमस्माकं जीवनं तथाविधं कृत्रिमं भावनाशून्यं च वर्त्तते यत् सत्यमपि व्यंग्यम्प्रतिभाति यथार्थमपि च कल्पनाप्रसूतं प्रतीयते।

भवानेव विचारयतु यत् 'ओं शान्तिः शान्तिः शान्तिः' इति निबन्धे यन्मया निरूपितं किन्तदयथार्थं वर्त्तते? 'उत्तरपुस्तिकासु पत्राणि' इत्यात्मकस्य निबन्धस्य विषयवस्तु किं काल्पनिकं भवति? 'निमन्त्रणपत्र-प्राप्तेरनन्तरम्' इति लेखे यद् वर्णितं किं तत् सत्यं नास्ति? 'अभिनन्दन-समारोहः' अथवा 'अध्यक्षताया आनन्दानुभूतिः' इत्येतयोर्लेखयोः प्रस्तुतेन विषयवस्तुना किम्भवान् सहमतो न वर्त्तते? 'भार्यावशीकरणोपायाः' इति निबन्धे प्रदत्तानि वर्णनानि किमयथार्थानि वर्त्तन्ते?–यद्येवं नास्ति तर्हि कथं भवान् एतान् निबन्धान् केवलं कल्पनाप्रसूतान् मनोरञ्जकता-मात्रप्रदान् वा कथयित्वा विरमति? मया त्वस्मिन् पुस्तके व्यंग्यमाध्यमेन संस्कृतभाषायां तत्समीचीनं साहित्यं लिपिबद्धं कृतं यत् सामयिकसमाजस्य पूर्णं चित्रं प्रस्तौति। अत एव नाऽत्र किमपि काल्पनिकमयथार्थं वा वर्त्तते। 'व्यंग्य' नामकरणेन अस्या रचनाया वैशिष्ट्यं नाऽस्तं गमिष्यति–इत्येष मम दृढो विचारः।

## कृतज्ञता-ज्ञापनम्

व्यंग्यलेखेषु रोचकतावर्धनाय पुस्तकेऽस्मिन् सप्तदश रेखाचित्राणि प्रदत्तानि। व्यंग्यचित्राणां निर्माणं कानपुरनगरस्य रेल-बाजार निवासिना श्री व्रजेश शुक्ल महोदयेन मन्निर्देशानुसारं सद्य एव सम्पादितम्। तथैव अक्षयवट-प्रकाशनसंस्थायाः-सञ्चालकेन श्री सत्यव्रत मिश्रेण नानाकाठिन्य-समागमेऽपि पुस्तकस्याऽस्य मुद्रणे प्रकाशने च यथासंभवमभिमतः सहयोगः सम्पादितः। अत एव तावुभावपि महानुभावौ धन्यवादार्हौ भवतः।

अथ चान्ते मया निम्नपद्यचतुष्टयेन ते गुरवोऽपि कृतज्ञताज्ञापने समर्पणभावे च स्मृता भवन्ति यत्कृपाकटाक्षैरेव मदीया मूका सरस्वती मुखरीभूता संस्कृतसाहित्यं च यत्किञ्चित्समृद्धितां गतम्–

जिज्ञासूपाह्वविद्वान् न्यवसदिह युगे ब्रह्मदत्ताऽभिधानः,
वाराणस्यां पुरा यः प्रयतसुरगिरो राजधान्यां शुभायाम्।
तस्याऽन्तेवासिरूपस्त्वहमपि सकलं शास्त्रमध्येतुकामः,
सश्रद्धं सोत्सुकं चाऽप्रतिहतमनसा यच्छरण्यं प्रपेदे।।

तत्राऽऽश्रमे निवसता तु मया च साक्षात्,
यस्माद् अधीतमथ व्याकरणादिशास्त्रम्।
नानापुराणनिगमादिषु यद् रहस्यम्,
प्राप्तं च यस्य कृपया बहुधा तदैव।।

तेषामाचार्यवर्याणाम् प्राच्यविद्याविनोदिनाम्।
**श्रीमद्विजयपालानाम्** पण्डितानां शुभे करे।।

संस्कृत-व्यंग्य-गद्यानाम् अपूर्वः संग्रहस्त्वयम्।
मया प्रणतभावेन सादरं च समर्पितः।।

यद्यपि मया स्वसीमितधिया दोषपरिमार्जने यथाशक्ति पर्याप्तः प्रयासः सम्पादितः पुनरपि पुस्तकेऽस्मिन् यदि क्वचिद् दोषाः दृष्टिपथमागताः स्युस्तदा सहृदयाः पाठकाः कृपया निःसंकोचं मां सूचयन्तु येन भविष्यत्कालीनसंस्करणेषु तेषां निराकरणं प्रभवेत्।

**संस्कृत-दिवसः**
**१७ अगस्त, १९८९**

**संस्कृतभाषायाः सेवकः**
**प्रशस्यमित्रः शास्त्री**

# द्वितीयं संस्करणम्

मत्कृते महानयं हर्षप्रकर्षसमयः समुपस्थितो यत् पुस्तकस्याऽस्य द्वितीयं संस्करणं प्राकाश्यं समुपैति। प्रायः विंशतिवर्षेषु यदा पुस्तकस्य प्रथमं संस्करणं पूर्णतया समाप्तम् अथ च विगतेषु द्वित्रिवर्षेषु पुस्तकस्य वाञ्छा पाठकैः वारं वारं प्रकटीकृता परन्तु पुस्तकाऽभावात् तेषामाग्रहस्वीकारे नितराम् असमर्थता सञ्जाता तदा तत्सर्वां स्थितिं समीक्ष्य प्रकाशकेन मदीयप्रेरणया द्वितीय-संस्करणस्य प्रकाशने विचारः स्वीकृतः।

सप्तविंशतिवर्षेषु व्यतीतेष्वपि पुस्तके विद्यमानाः व्यंग्यनिबन्धाःसाम्प्रतमपि समाजस्य देशस्य च सामयिकी स्थितिं पूर्ववत् प्रकटीकर्त्तुमेव समर्थाः। मानवस्य मनोवृत्तौ समाजे च किमपि विशिष्टं परिवर्त्तनं न लक्ष्यते। विविधाः समस्याः साम्प्रतमपि तथैव समाजे मुखं व्यादाय पुरतः समुपस्थिता एव दृश्यन्ते। अत एव एतेषां व्यंग्य-निबन्धानां सामयिकताः समीचीनतामेव भजन्ति।

साम्प्रतं संस्कृत-भाषा-साहित्यस्य विश्वविद्यालयीयाश्छात्राः एम्०फिल्०, पी-एच्०डी-प्रभृति शोधोपाधीनां प्राप्त्यर्थं नवीनान् ग्रन्थान् आधृत्य आधुनिकतासम्बद्धान् अभिनवविषयान् वा अधिकृत्य कार्यं कर्त्तुं कामयन्ते। तत्र मदीय-रचना-संसारस्तथाविधान् छात्रान् पर्याप्तं सन्तोषयति। अत एव पुस्तकस्याऽस्य द्वितीय-संस्करणस्य प्रकाशने महती आवश्यकता प्रादुर्भूता। अधुना पुस्तक-प्राप्ति-सौकार्यत् सर्वेषां छात्राणां पाठकानां सहृदयानां विदुषां च मनोरथः पूर्णतामेष्यतीति मम विचारः।

साम्प्रतं कम्प्यूटर-मुद्रणस्य युगः समागतः। अत एव पुस्तकमिदं नवीनाऽक्षरसंयोजनपुरःसरं पूर्वाऽपेक्षया मनोरमरूपेण प्रकाश्यते। मुखपृष्ठं परिहृत्य सर्वाणि रेखाचित्राणि पूर्वमिव विद्यमानानि व्यंग्यनिबन्धानां मनोरञ्जकतामेव वर्धयति। प्रथमसंस्करणे विद्यमाना मुद्रणदोषा अपि दूरीकृताः। अत एव मन्ये द्वितीयसंस्करणमिदं पाठकानां कृते नितराम् उपयोगि भविष्यति।

अस्य संस्करणस्य प्रकाशने अक्षयवट-प्रकाशन संस्थायाः प्रबन्धकेन श्री सत्यव्रतमिश्रेण यः परिश्रमः संक्षिप्तसमये सम्पादितस्तदर्थमहं तस्मै भूरिशो धन्यवादं विज्ञापयामि।

**वसन्त-पञ्चमी**      **पाठकानां स्नेहाधीनः**

**१३ फरवरी, २०१६**      **प्रशस्यमित्रः शास्त्री**

# व्यंग्यानुक्रमः

●

वेदाहमेतं पुरुषं महान्तम्,
आदित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति,
"नाऽन्यः पन्था विद्यतेऽयनाय।।"

-यजुर्वेद ३१।१८

## नाऽन्यः पन्था विद्यतेऽयनाय

सर्वे प्रत्याशिनस्तु भ्रष्टाः,
कुत्र मार्गयसि स्वच्छं चरितम्?
मतदाने समये सम्प्राप्ते,
मत्रपत्रं किं पश्यसि मित्र!?
प्रयतस्वाऽत्र महाभ्रष्टानाम्-
मध्ये कस्यचिदपि वरणाय।।
नाऽन्यः पन्था विद्यतेऽयनाय।।१।।

जलं दूषितं स्थलं दूषितम्,
वायुमण्डलं महादूषितम्,
पातव्यम् इदमेव हि सलिलम्,
श्वसितव्यं चैवाऽस्मिन् पवने।
भोपालं कुरुते चाऽऽह्वानम्,
शीघ्रं सज्जो भव मरणाय।।
नाऽन्यः पन्था विद्यतेऽयनाय।।२।।

वस्तुनि वस्तुनि मिश्रणकार्यम्,
रोगवर्धनं देह-नाशनम्,
शुद्धं दुग्धम् अत्र दुर्लभम्,
नापि च शुद्धविषस्य प्रापणम्।
स्निग्धं वसामिश्रमपि ज्ञात्वा,
भव तत्परः एतद् अशनाय।।
नाऽन्यः पन्था विद्यतेऽयनाय।।३।।

बहुयोग्योऽपि भृतिं नो लभते,
बहुविद्योऽपि न कार्यरतोऽस्ति,
आरक्षणनियमेन निबद्धः,
हीनजनोऽपि पदेषु रतोऽस्ति।
यदि चेच्छसि प्राप्तुं पदमत्र,
प्रार्थय देवम् अधमजननाय।।
नाऽन्यः पन्था विद्यतेऽयनाय।।४।।

सर्वेषां दानानां मध्ये,
उत्कोचस्य तु दानं श्रेष्ठम्,
एतद् दानं प्राप्य कर्मिणः,
समुद्यतास्तव कार्यं कर्त्तुम्।
यदि चेच्छसि साधयितुं कार्यं,
कुरु शीघ्रम् एतद्दानाय।।
नाऽन्यः पन्था विद्यतेऽयनाय।।५।।



# अश्वस्य संस्कृतशिक्षकः पण्डितः

पुरातनम् इदं वृत्तम् प्रायः सत्यमेव ज्ञातव्यं भवद्भिः। एकदा राजपुरोहितो ज्ञानदेवो बहुकालाऽनन्तरं स्वकीयं बालसखायं श्री धर्मदेवं स्मारं-स्मारं तं द्रष्टुकामः सन् तस्य गृहं जगाम। सोऽपश्यत् यत् तस्य सखा एकस्मिन् अतिजीर्णे कुटीरे निवासं कुर्वन् शीर्णवसनः तत्रैव कांश्चित् छात्रान् अध्यापयन् दिनानि कथमपि यापयति स्म। धर्मदेवोऽपि बहुकालाऽनन्तरं स्वम् अभिन्नमित्रं श्रीज्ञानदेवं विलोक्य हर्षेण साऽश्रुनयनो बभूव।

**ज्ञानदेवः**–अहो मित्र! कीदृशस्त्वम्? कः समाचारश्च?

**धर्मदेवः**–त्वं तु पश्यस्येव, किमत्र कथनीयम्? यथाकथञ्चित् जीवनं निर्वाहयामि छात्रान् अध्यापयन्। न खलु त्वादृशम् मे बुद्धिचातुर्यं कौशलं वा यत् कुत्रचित् पुरोहितो भूत्वा अहमपि सुखमनुभवेयम्।

**ज्ञानदेवः**–(मित्रस्य दुर्दशयाऽत्यन्तं दुःखितः सन् तम्प्रति) अस्तु तर्हि श्वस्तने दिवसे राजसभायाम् आगच्छ। तत्रैव कमप्युपायं विचिन्त्य तवाऽपि प्रबन्धं करिष्यामि। त्वया तत्रेदमेव केवलं करणीयं यद् राजा त्वां यत् किमपि पृच्छेत् तत् सर्वम् 'ओम्' इत्युक्त्वा स्वीकार-स्वरेणैव वक्तव्यम्।

**धर्मदेवः**–(स्वनिर्धनतया अत्युद्विग्नः सन् मित्रस्य वचनम्प्रतिश्रुत्य) तथाऽस्तु, यथा त्वं कथयिष्यसि तथैव करिष्यामि।

(अग्रिमे दिवसे च ज्ञानदेवः स्वसखायं धर्मदेवं राजसभायाम् आगच्छन्तं दूरादेव विलोक्य राजानम्प्रति)

**ज्ञानदेवः**–महाराज! अद्य प्रातःकाले माम् एको विलक्षणः पण्डितः अमिलत्, यः खलु केवलं वर्षद्वयेनैव घोटकं संस्कृतभाषणक्षमं करोति।

**राजा**–किमिदं सत्यं यत् तुरङ्गमोऽपि संस्कृतं ब्रूयात्?

**ज्ञानदेवः**–अथ किम्? असौ पण्डितो मयाऽत्र भवतां समीपमेव अद्य आगमनाय निमन्त्रितो वर्तते। (किञ्चिद् विरम्य) पश्यतु स्वामिन्! स विलक्षणः पण्डितस्तु सम्प्रति भवतां समक्षम् आयात्येव।

**राजा**–(सविस्मयं शनैः-शनैः स्वाभिमुखमेव पण्डितं श्रीधर्मदेवम् आयान्तं विलोक्य) अहो पण्डितप्रवर! किमिदं सत्यं यद् भवान् केवलं वर्षद्वयेनैव घोटकं संस्कृतं शिक्षयितुम्.........।



**धर्मदेवः**–(मध्ये एव) आम्, श्रीमन्! एतत्तु सरलमेव कार्यं मत्कृते।

(राजा चाऽसौ तथाविधम्पण्डितम्प्राप्य प्रहृष्टः सन् समीपस्थमेव निजमन्त्रिणम् आदिशन् एवम् उवाच–)

**राजा**–अयि मन्त्रिमहोदय! एतस्य पण्डितमहोदयस्य कृते उत्तमभोजनवस्त्र-निवासादेः सुन्दरः प्रबन्धः करणीयः। तथा चाऽस्मै पण्डिताय संस्कृतभाषां शिक्षयितुम् एकः सुन्दरो घोटकोऽपि दातव्यः, येनाऽहं जानीयां यत् तुरङ्गमः कथं संस्कृतं वदति।

(राज्ञः आदेशाऽनुसारं श्रीधर्मदेवः सकलसुखोपभोगसमन्वितं सुन्दरं निवासस्थानम्प्राप्तवान्, किन्तु चिन्तया परिवृतः सन् कथमपि हार्दिकम्प्रमोदं नाऽधिगतवान्। स त्विदमेव मन्यते स्म यद् ज्ञानदेवेन तस्य मृत्योरेव प्रबन्धः कृतः)।

(द्वि-त्रिदिनाऽनन्तरमेव यदा स विषण्णमनाः सन् चिन्तितस्तिष्ठति स्म तदैव तस्य गृहे स राजपुरोहितः सखा ज्ञानदेवः समागतः। अतिचिन्तानिमग्नं च सखायं विलोक्य स पप्रच्छ–)

**ज्ञानदेवः**–मित्र! कथम् उद्विग्नो दुःखितश्च दृश्यसे? अधुना तु तव सर्वं दारिद्र्यं कष्टं च समाप्तमेव। गच्छ शीघ्रं मम भ्रातृजायां बालकादींश्च अत्रैवसमानीय सुखपूर्वकं निवासं कुरुष्व। विविधपदार्थान् राजप्रदत्तभोगांश्च स्वेच्छया भुञ्जानः सानन्दो भव।

**धर्मदेवः**–अरे मित्र! किन्तु यदा वर्षद्वयाऽनन्तरम् अश्वस्य परीक्षणं भविष्यति तदा किं भविता? किम् अश्वोऽपि कुत्रचित् संस्कृतभाषां शिक्षितुं शक्नोति? त्वया कष्टसागरे पातितः अहन्तु स्वकीयं मृत्युमेव पश्यामि।

**ज्ञानदेवः**–अहो मित्र! इदमेव तु वैचित्र्यम्! त्वं तु वृथैव चिन्तितोऽसि। श्रृणु सावधानं मद्वचनम्। राज्ञां समीपे बुद्धि-विवेकौ न भवतः। संसारेऽस्मिन् चतुरस्तु स एव पुरुषो भवति यस्तान् सदैव "भवन्त एव बुद्धिसागरा मेधाविनः" इत्याद्युक्तिभिः अथ च "इन्द्रस्त्वम्, वरुणस्त्वम्, कुबेरस्त्वम्" इत्येवमादि वचोभिश्च तान् मूर्खान् कल्पयेत्। सर्वे चाटुकारा इदमेव कुर्वन्ति। वयमपि तु सर्वम् सदमेव कुर्महे।

**धर्मदेवः**–परम् अहन्तु स्वमरणाऽतिरिक्तं किमपि न पश्यामि साम्प्रतम्। त्वमेतत् कथं न स्पष्टं कुरुषे यद् वर्षद्वयाऽनन्तरं मम किं भविष्यति?

**ज्ञानदेवः**–तत् तु सङ्केतितमेव मया यत् किमपि नैव भविता। सम्प्रति वर्षद्वयस्य सुदीर्घः कालो विद्यते। क इदं जानाति यद् वर्षद्वये राजा मरिष्यति घोटको वा मरिष्यति? यदि कदाचिद् राजा नैव मृतः स्यात् तर्हि घोटक एव मरिष्यति। एतस्योत्तरदायित्वं मम वर्त्तते यत् पुनस्तुभ्यम् अभिनवो घोटकः प्रदास्यते। तथा च सोऽपि घोटको वर्षद्वयात् पूवमेव दिवंगतो भविष्यति, पुनस्तृतीयः.....।

(ज्ञानदेवस्य तत्सर्वं वचनमाकर्ण्य धर्मदेवेनेदम् अनुभूतं यत् तस्य ज्ञानचक्षूंषि अकस्मादेव समुन्मीलितानि इति)।

●

## अभिनन्दन-समारोहः

नाऽहं जानामि यद् अभिनन्दन-समारोहाणां प्रचलनं कस्माद् युगात् प्रारभत। एतद्विषये तु इतिहासज्ञा एव सप्रमाणं वक्तुं शक्नुवन्ति। किन्तु यदाऽहं किञ्चित् ज्ञानवान् सम्पन्नः तदानीन्तनादेव पश्यामि यद् अस्माकं नगरे प्रायशः यस्य कस्यचित् अभिनन्दनं प्रतिमासमेव भवति। एते अभिनन्दन-समारोहाः प्रायशः जीवितावस्थायामेव सम्पादिता भवन्ति। मरणानन्तरं च स्मृति-दिवसा एव आयोज्यन्ते।

### अभिनन्दनस्य भेदाः

अभिनन्दनं द्विविधं भवति। एकं केवलं वाचिकम् एव द्वितीयञ्च वाचा पुरःसरं दक्षिणायुक्तम्। तत्र प्रथमम् अभिनन्दनं सरलं, व्ययहीनम् प्रपञ्चमुक्तं च भवति। एतत्प्रकारकस्य अभिनन्दन-समारोहस्य सम्पादनाय केवलम् एकः सभागारः केचन श्रोतारः ध्वनिविस्तारकयन्त्रम् अथ च केचन पुष्पहारा एवाऽपेक्ष्यन्ते। इदम् अभिनन्दनं सर्वथा हानिरहितम् अल्पव्ययसाध्यं च भवति। अस्मिन् अभिनन्दनकार्यक्रमे अभिनन्दनीयाः पुरुषाः कतिपयदिनेभ्यः पूर्वं स्वयमपि निमन्त्रण-पत्राणां वितरणकर्मणि प्रवृत्ता भवन्ति। यदि च अभिनन्दन-समारोहस्य सूचनापत्रं पोस्टररूपेण बृहत्कायं भवति तदा ते स्वयमेव स्वपुत्रैः सार्धम् अर्धरात्रौ भित्तिकासु चतुष्पथेषु च तत्पोस्टरपत्रस्य संश्लेषणं कुर्वाणा दृश्यन्ते। अभिनन्दन-दिवसे च ते अभिनन्दन-समारोहे गत्वा मञ्चोपरि तथाविधम् उपविष्टा भवन्ति यथा किल अनेन अभिनन्दन-कार्येण सह तेषां लेशमात्रोऽपि कश्चित् सम्बन्ध एव नाऽस्ति।

### एकः अनुभवः

एकदाऽहम् एकस्य महोदस्याऽभिनन्दन-समारोहे सम्मिलितोऽभवम्। तत्र वक्तृभिः तस्य महोदस्य तावती प्रशंसा कृता, येनाऽहं क्षणद्वयं भ्रान्तो भूत्वा व्याचारयम् यत् पुरुषोऽयं मानवो वर्तते देवो वा?

अभिनन्दनसमारोहे प्रायः वक्तारः अभिनन्दनीय-पुरुषस्य तान् एव गुणान् कीर्त्तयन्ति ये गुणाः प्रायस्तस्मिन् पुरुषे नैव भवन्ति। अभिनन्दन-समारोहस्य भाषणानि श्रुत्वा इदमेव प्रतीयते यत् तस्मिन् अभिनन्दनीयो महापुरुषे कोऽपि दुर्गुणः कथमपि सूक्ष्मदर्शन-यन्त्रेणाऽपि कदाचित् न शक्यते द्रष्टुम्।

### अन्योऽप्येकः मनोरञ्जकोऽनुभवः

एकदा एकस्मिन् अभिनन्दन-समारोहे अहं गतवान्। सौभाग्यात् संयोगाद् वा तत्र अभिनन्दनीयः पुरुषः मम किञ्चित्परिचित एवाऽभवत्। समारोहा-

ऽनन्तरं तस्मै साधुवादं शुभकामनां च प्रकटयितुं यदाऽहं तस्य समीपं गतवान् तदा मयाऽनुभूतं यत् स किञ्चिद् विषण्णवदनः उदासीनश्च प्रतीयते। तद् विलोक्य मया पृष्टम्–'अयि महाशय! भवताम् अभिनन्दनं सोत्साहं सानन्दं च सम्पन्नम्। साम्प्रतं च भवता प्रसन्नेनैव भवितव्यं पुनः किं कारणं यद् भवान् उद्विग्न इव दृश्यते?'

तद् आकर्ण्य असौ महोदयो माम् एकान्ते नीत्वा कर्णान्तिके शनैः एवम् उक्तवान्–'त्वं तु अस्मदीय एवासि। त्वत्तः किं गोपनीयम्। अयम् अभिनन्दन-समारोहस्य सञ्चालको मन्त्री मां वञ्चितवान्। अहं कदाप्येनं क्षन्तुं न क्षमः।

अहं पृष्टवान्–'अन्ततः का वार्त्ता वर्तते? कृपया ब्रवीतु भवान् यत् किं कारणम् अत्र क्रोधस्य?'

स उवाच–अहं तु तस्मै (सञ्चालकाय) पञ्चविंशति पुष्पहारेभ्यो धनं दत्तवान् परन्तु वञ्चकोऽयं केवलं पञ्चदश पुष्पहारान् एव क्रीत्वा अभिनन्दन-समारोहे मम कण्ठे धारयितवान्। तथा च मया तस्मै स्थल-कमलपुष्पैः (गुलाब) निर्मितानां हाराणां कृते धनं प्रदत्तम् आसीत् किन्तु तेन तत्र केवलं कन्दुकपुष्प-(गेंदा) हाराणाम् एव प्रयोगः समारोहे कृतः।

अहम् उक्तवान्–अस्तु, मा कोपीः, कुरु धैर्यम् पुनः कदाचित् यदा



भवताम् अभिनन्दनं भवेत् तदा पूर्वमेव भवान् स्वयमेव यथेच्छं पुष्पहारादीनामपि प्रबन्धं कृत्वा मञ्चासीनो भवतु।

स उवाच–अग्रिमस्य अभिनन्दनस्य कृते तु अस्माकं भार्या नैव समुद्यता भविष्यति। 'कथं नो्यता भवेत्' इति च मया पृष्टे स उक्तवान्–'एतस्य अभिनन्दन-समारोहस्य समायोजनार्थम् एव तस्याः एकं सुवर्णाभूषणम् अहं विक्रीतवान्, अतः सा कथम् अधुना अन्यत् स्वर्णाभूषणं पुनः प्रदास्यति?'

तत एवंविधा एव अभिनन्दन-समारोहा वाचिकाः।

## अथ द्वितीयविधम् अभिनन्दनम्

अथ द्वितीयं यद् दक्षिणायुक्तम् अभिनन्दनं भवति तस्याप्येकं महत्त्वपूर्णं वृत्तं श्रूयताम्।

एकस्य महोदयस्य अभिनन्दन-कार्यक्रमे आयोजकेन अयं निश्चयः कृतः यद् अभिनन्दन-समारोहस्य स्मारिका मुद्रापयिष्यते। तत्र च स्मारिकायां प्रकाशितैः विज्ञापनैः यद्धनं प्राप्स्यते तत्सर्वम् अभिनन्दिताय महोदयाय सादरं समर्पयिष्यते।

तस्य महानुभावस्य अभिनन्दन-समारोहः सोत्साहं सम्पन्नः। संयोजकमहोदयो यदा मञ्चे सहर्षं तालीवादनपुरःसरं तस्य करकमलेषु धनमञ्जूषां (थैली) समर्पयामास तदा तस्या आकृतिं विलोक्य प्रतीयते स्म यत् तस्याम् एकलक्षरूप्याणि तु ध्रुवमेव भविष्यन्ति। समारोहाऽनन्तरं यदा चाऽसौ महोदयः किञ्चिदेकान्तं प्राप्य सोत्कण्ठं तां वस्त्रपुटीम् (थैली) उद्घाटयामास तदाऽसौ अत्यन्तं दुःखितः क्षुब्धश्चाऽभवत्। यतो हि तत्र केवलं स्मारिका आसीत् तथा च स्मारिकायां प्रकाशितानां विज्ञापनानां यानि देयकपत्राणि (बिल) आसन् तेषामेव विपुलः संग्रहो तत्र बभूव। रूप्यकं तु एकमपि नाऽभूत्।

अधुना सः अभिनन्दितो महोदयः देयकपत्राण्येव नीत्वा विज्ञापनदातॄणां गृहेषु आपणेषु च गत्वा तद्धनप्राप्त्यर्थं प्रत्यहं प्रयतमानो दृश्यते।

तेषां महानुभावानां तथाविधां तद्दुर्गतिं विलोक्यैव अहं निश्चितवान् यत् यदि कोऽपि मम अभिनन्दन-समारोहम् आयोजयिष्यति तदा अहं तु पूर्वमेव वस्त्रपुटी-(थैली) धनं नीत्वा पश्चात् चिन्तारहितः सन् अभिनन्दनार्थं मञ्चस्थो भविष्यामि। यदि कोऽपि माम् अभिनन्दितुम् इच्छति तर्हि कृपया शीघ्रमेव प्रस्तावं प्रेषयतु।

●

# ताम्बूलविक्रेतुर्नमस्काराः

गांजा-भङ्ग-चरसादि मादक द्रव्याणां विक्रयाऽभियोगे कश्चित् ताम्बूलविक्रेता निर्धनः पुरुषः निगृह्य थानाध्यक्षस्य समक्षम् उपस्थापितः। गालिप्रदानपूर्वकं थानाध्यक्षस्तं पप्रच्छ–'कथं रे! दुष्ट! चाय-ताम्बूलविक्रयव्याजेन त्वं प्रच्छन्नरूपेण मादकद्रव्याणि विक्रीणासि? ......देशं द्रुह्यसि.... श्याल! तव चर्माणि च्छेत्स्यामि.......' इत्यादि उक्त्वा तस्मै पञ्च-षड्वारं चपेटिकादानमप्यकरोत्।

ताम्बूलविक्रेता चक्षूंषि सजलानि कृत्वा रुदन् अब्रवीत्–'महाराज! निर्धनोऽहम्, कृपया एकं वारं क्षमस्व माम्, इतःपरं न करिष्यामि गर्हितमिदं कार्यम्, शिशवो मम परासवो भवेयुः किन्तु कथमपि नैतत् पुनः कर्त्तास्मि गर्हणीयम् इति प्रतिजानामि अद्य–केवलम् एकवारं क्षमस्व भगवन्!'

**थानाध्यक्षः**–त्वं गांजाभङ्गादिमादक-द्रव्याणि कुतः प्राप्नोषि? कस्तुभ्यं ददाति?

**ताम्बूलविक्रेता**–मह्यं सीतारामयादवः प्रददाति।

**थानाध्यक्षः**–स तु पुरातनस्य (अवकाशं प्राप्तवतः) दरोगामहोदयस्य पुरुषो वर्त्तते। (तदनन्तरं थानाध्यक्षः समक्षम् उपस्थितमेकं पुरुषम् अङ्गुल्या निर्दिशन् आह) अयम् अस्माकमेव पुरुषो वर्त्तते, अवगतं त्वया?

**ताम्बूलविक्रेता**–अवगतं श्रीमन्! अवगतम्।

**थानाध्यक्षः**–शृणु, अस्माकम् अंशः समयेन प्रदातव्यः।

**ताम्बूलविक्रेता**–एवं महोदय! तथैव भविता। भवान् निश्चिन्तो भवतु अहं भवदीयमंशं निश्चितमेव उचितावसरे मासान्ते स्वयमेव आगत्य दास्यामि।

**थानाध्यक्षः**–श्याल! सर्वे आगत्य स्वयमेव ददति स्वकीयम् अंशम्। त्वत्कृते च मया पुरुषः प्रेषितः। आत्मानं किम् मन्यसे? इतः परं यथोचितं कर्त्तव्यम्–इत्येव ज्ञातव्यम्।

**ताम्बूलविक्रेता**–श्रीमन्! अनवधानतावशादेव त्रुटिः सञ्जाता, कृपया दयस्व वारम् एकम् (इत्युक्त्वा ताम्बूलविक्रेता पञ्चशतरूप्यकाणां नोटमेकं निःसार्य तस्मै थानाध्यक्षाय दत्तवान्।

**थानाध्यक्षः**–अस्तु, गच्छ! यन्मया उक्तम् तत् पालनीयम्।

**ताम्बूलविक्रेता**–अवश्यं श्रीमन्! (इत्युक्त्वा स नमस्कारं कृत्वा पुलिस-स्थानात् प्रसन्नः निष्क्रान्तः)।

●

# अध्यक्षताया आनन्दानुभूतिः

सभाया अध्यक्षताकरणमपि एको महान् रोगो वर्त्तते। मया तु केचित्तथाविधा अध्यक्षतारोगेण पीडिताः पुरुषाः दृष्टाः येषां स्थितिः अध्यक्षतां विना तथैव भवति यथा कस्यचित् मादकद्रव्यसेविनः पुरुषस्य स्थितिः मादकद्रव्यं विना। एवंविधः पुरुषः प्रायः शनैः शनैः उदासीनताम् उद्विग्नतां च समाश्रयति। बहुदिनं यावत् अध्यक्षताम् अकुर्वाणस्तु हताशः शुष्कश्च भवितुं प्रारभते। तथाविधे संकटापन्नसमये तत्समक्षं यदि कश्चित् मोहल्ला-सत्सङ्ग-समितेरध्यक्षतार्थमपि प्रस्तावम् उपस्थापयेत् तदा तन्मुखे तेजस्विता चमत्कृतिश्च समागच्छति। ते तुं मोहल्ला-बाल-सुधारसमितेरपि अध्यक्षता-करणार्थम् आहूताः सन्तः स्वस्थाः, सचेतनाः सजीवाश्च जायन्ते।

अध्यक्षतासुखं तद्दिव्यं सुख वर्त्तते यत्कृते बहवो जनाः स्वकीयं धनमपि व्ययं कर्तुं समीहन्ते। तेषां कृते यदि कस्यचित् समारोहस्य अध्यक्षपदं सुरक्षितं भवेत् तर्हि ते समग्रस्य आयोजनस्य व्ययभारमपि वोढुं स्वत एव समुद्यता भवन्ति। अत एव केचन चतुरास्तथाविधानाम् अध्यक्षतारोगग्रस्तानाम् अन्वेषणे अपि तत्परा भवन्ति, येन तान् तोषयित्वा स्वार्थसिद्धिं सम्पादयेयुः।

**अध्यक्षाणां व्यवहारः**

प्रायः दृश्यते यत् सरलो निरभिमानश्चाऽपि पुरुषः, यः खलु भवद्भिः समम् आसीनः सहजतया वार्त्तालापं विधत्ते, सभाध्यक्षपदम् अवाप्य भवदपेक्षया आत्मानम् अकस्मादेव किञ्चिदधिकं महत्त्वपूर्णं च मन्तुं प्रारभते। स अध्यक्षपदाय स्वकीयनामधेयस्य प्रस्तावम् आकर्ण्य सहसा भवतां मध्यतः शनैः-शनैः किञ्चिद् गौरवान्तिेन पादन्यासेन प्रचलन् प्रमुदितमनाः स्वग्रीवां स्तब्धीकृत्य सभाध्यक्षस्यासने विराजमानो भवति। यद्यपि अध्यक्षासने समुपविश्य स सर्वप्रथमम् इदमेव कथयति यत् 'अहम् एतस्य पदस्य कृते सर्वथा अयोग्यः अनुपयुक्तश्च भवामि' किन्तु तत्र पुनर्विचारस्य अवसरमपि स भवद्भ्यो न प्रददाति। अध्यक्षासने च स तथाविधम् अभिनयं कृत्वा तिष्ठति यथा तस्य निर्माणम् अध्यक्षतां कर्त्तुमेव अभवत्।

**अनुभवसम्पन्नाः अध्यक्षाः**

अधुना अनुभवसम्पन्नानाम् अध्यक्षाणां कानिचिद् विशिष्टानि कर्माणि वर्ण्यन्ते। अनुभवसम्पन्नाः अध्यक्षाः स्वकण्ठस्थितान् पुष्पहारान् तदा पर्यन्तं नाऽवतारयन्ति यदा पर्यन्तम् आयोजकः छायाचित्राकर्षणं न सम्पादयति। अनुभवविहीनास्तु सद्य एव स्वकण्ठात् मालां निःसारयन्ति, येन चित्राऽऽकर्षणकाले स्वयमेव पुनः मालाधारणे लज्जाऽनुभूयते। मालाभिर्विना च

चित्राणां सौन्दर्यं नष्टमेव भवति। अनुभवसम्पन्नाः अध्यक्षाश्च छायाचित्राऽऽकर्षणाऽन्तरमपि स्वमालासमूहम् उत्तार्य मञ्चे स्वसमक्षमेव स्थापयन्ति, येन विलम्बेनाऽऽयाताः श्रोतारो द्रष्टारश्च मालां दृष्ट्वा जानीयुः यत् मञ्चस्थितेषु पुरुषेषु मध्ये कः वास्तविकः अध्यक्षो वर्त्तते। पुष्पहारैर्विना तु अध्यक्षताया आनन्दोऽपि अपूर्ण एव भवति।



अध्यक्षीयभाषणस्य तालीवादनेन सह महान् सम्बन्धो भवति। प्राप्तानुभवैः अध्यक्षैः सह 'तेषां' प्रशंसकाः पञ्च-षट् तालीवादका अपि भवन्ति ये निश्चितमेव तेन सममेव सभायामागच्छन्ति। ते च सभायां गत्वा तत्र च पूर्व-योजनानुसारं यत्र तत्र यथास्थानं समुपविश्य अध्यक्षीयभाषणस्य मध्ये मध्ये विभिन्नावसरेषु (उचिताऽनुचितमप्यनवलोक्य) सोत्साहं तालीवादनं प्रारभन्ते येनाऽन्येऽपि श्रोतारो विवशतया परम्परानुसारं च तान् अनुकर्त्तुं बाध्याः भवन्ति। तालीवादनद्वारा असामयिकं नीरसं च (बकवास-पूर्णमपि) भाषणं

महत्त्वपूर्णं निर्मीयते येन समाचारपत्रस्य समुपस्थिताः संवाददातारः मुद्रापयितुं विवशा भवेयुः।

## अध्यक्षाणां सर्वज्ञता

अध्यक्षपदारूढा मानवाः प्रायः सर्वविषयमर्मज्ञा भवन्ति। अध्यक्षीयभाषणे च ते निजसर्वज्ञतामपि प्रकटयन्त्येव। तदत्र तन्निदर्शनार्थं केचित् रोचका मनोरञ्जकाः प्रसंगा भवतां सेवायां मया प्रस्तूयन्ते—

एकदा महाकवितुलसीदासमहोदयस्य चतुःशताब्दपूर्त्तिसमारोहस्याऽवसरे अध्यक्षतां कुर्वाणः कश्चित् अध्यक्षमहोदयः तुलसीदलस्य वैशिष्ट्यं चरक-सुश्रुतादिशास्त्र-प्रमाणपुरःसरं वक्तुं प्रारभत। श्रोतारश्च श्रावंश्रावम् प्रमोदभराः सञ्जाताः।

एकदा च कश्चिद् रूमानियादेशस्य सांस्कृतिक-प्रतिनिधिमण्डलस्य स्वागत-समारोहस्याऽध्यक्षतां कुर्वाणो यदा रोमदेशस्य जूलियस सीजरनामानं महापुरुषं योद्धारं प्रशशंस तदा तेनाऽऽनीताः तालीवादकाः घोरतालीवादनेनैव तस्योद्धारं कृतवन्तः।

सुप्रसिद्धहिन्दीलेखकस्य श्री स० ही० वात्स्यायन 'अज्ञेय' महोदयस्य सम्मान-समारोहस्याऽध्यक्षतां कुर्वाणः कश्चित् सज्जनः स्वकीयाऽध्यक्षीयभाषणे यदा श्रीमन्तं वात्स्यायनमहोदयं प्रसिद्ध-कामसूत्रस्य रचयितारम् उद्घोष्य तस्य प्रशंसां कर्त्तुं प्रारब्धवान् तदाऽपि तालीवादकास्तस्याऽध्यक्षीयभाषणस्य महिमानं तत्र विकटतालीवादनेन प्रकटितवन्तः।

एकस्याऽध्यक्षमहोदयस्य वृत्तान्तं तु इतोऽप्यधिकं मनोरमं वर्त्तते। कस्याश्चित् शोकसभाया अध्यक्षतां कुर्वाणः स उक्तवान्—'अस्माकं कृतेऽयं महाहर्षस्य विषयो गौरवस्य च वार्त्ता विद्यते यद् भवन्तः एतस्मिन् शुभावसरे मह्यम् अध्यक्षपदं प्रदाय सम्मानितवन्तः।'

तदनन्तरं चाऽसौ सभाध्यक्षमहोदयः, यः कविरपि बभूव, निज-निर्मिताः वीररसपूर्णाः काश्चित् अभिनवकविताः श्रोतॄन् श्रावयित्वा तत्र अध्यक्षपदस्य स्वकीययोग्यतां प्रमाणीचकार।

## अध्यक्षाणां प्रकाराः

सभाध्यक्षातिरिक्तं अध्यक्षाणाम् अन्येऽपि भेदा भवन्ति, यथा—स्वागताध्यक्षः कोषाध्यक्ष इत्येवमादयः। इमे अध्यक्षास्तु भवन्ति किन्तु अध्यक्षतां कर्त्तुं कदाऽपि नाऽऽयान्ति न चैव प्रभवन्ति। तेषां विषये च प्रायः कोऽपि जानात्यपि नैव। एतत्प्रकारकम् अध्यक्षपदं पूर्वनिर्धारितं चन्दादिरूपेण धनं दत्त्वा प्राप्तुं शक्यते। अहन्तु एकं तथाविधं स्वागताध्यक्षं जानामि यः

संयोगाद् वास्तविकः अध्यक्ष एव समभवत्, परन्तु सः अध्यक्षपदेन स्वकीयं यद् भाषणं दत्तवान् तत् तु मूलरूपेण स्वागतभाषणमेव आसीत्। अस्तु।

अध्यक्षताया आनन्दं तु स एव जानाति यः स्वयमेव कुत्रचिद् अध्यक्षो भवेत्। यथोक्तमपि क्वचित् शास्त्रे-

**अध्यक्ष एव जानाति दिव्यम् अध्यक्षतासुखम्।**
**न हि बन्ध्या विजानाति गुर्व्याः प्रसववेदनाम्।।**



# मूल्य-निर्धारणम्

'नीयताम् अभिनवं शाकम्।'

'किम् अस्य मूल्यम्?'

'प्रति किलो षष्टि; रूप्यकाणि।'

'पञ्चाशत् रूप्यकाणि कुरु।'

'मूल्यं त्वत्र एकमेव भवति।'

'अरे ! किमपि तु न्यूनं करणीयमेव।'

'अत्र न्यूनता न भवति, यदि नेतव्यं स्यात् तर्हि नीयताम्।'

'अहं किलोद्वयं नेष्यामि, मूल्यं न्यूनं कुरुष्व।'

'भवान् दशकिलोपर्यन्तं नयतु किन्तु मूल्यं तु तदेव भविष्यति।'

'किं त्वं विक्रेतुं नेच्छसि?'

'विक्रेतुं तु कामये किन्तु प्रतीयते यद् भवान् क्रेतुमेव नेच्छति।'

'त्वं तु लुण्ठसि, तव शाकम् एतावत् मूल्यवत् न वर्तते।'

'किं भवान् कदाचित् पुराऽपि शाकं भुक्तवान्?'

'मया तु बहुवारं क्रीतं भुक्तं च, किन्तु त्वादृशो नीचपुरुषो दृष्टिपथं नाऽऽगतः।'

'कृपया मुखे नियन्त्रणं करोतु भवान्। वयं शाकं विक्रीणीमहे न तु सम्मान-विक्रयं कुर्महे।

'मया त्वादृशो विक्रेता न दृष्टः।'

'मयाऽपि त्वादृशो ग्राहको न दृष्टः।'

(तदनन्तरं स ग्राहकः समीपस्थां शाक-विक्रेत्रीं नारीम् उपगम्य पृच्छति।

'किम् मूल्यम् अस्य शाकस्य?'

'सप्ततिः रूप्यकाणि प्रतिकलो।'

'षष्टिः रूप्यकाणि कुरु।'

'कियत् नेतव्यं वर्त्तते?'

'किलो द्वयम्।'

'अस्तु तर्हि झोलकम् अग्रे कुरुष्व।'

(शाकं च नीत्वा स ग्राहकः साऽसूयं सव्यङ्ग्यं च तं शाकविक्रेतारं पूर्वपुरुषं व्यलोकयत्। तद् दृष्ट्वा स शाकविक्रेता तम् उक्तवान्–)

'अस्माकमेव गृहिणी वर्त्तते सा।' इति।।

●

# आधुनिकभारते तुलसीदासस्य पर्यटनम्

'स्वर्गाद् उद्विग्नः सन् एकदा महाकवितुलसीदासो भारतभूमिम्प्राप्तवान्। बहुदिवसात्तेन भारतवर्षं न दृष्टमासीत् अतः भारतम्प्रति मोह एव तं भारतदर्शनाय प्रेरितवान्। स पूर्वं केरल-प्रदेशं गतवान् तत्र च परशुरामस्य वंशजान् नम्बूदरीपाद-ब्राह्मणान् साक्षात्कर्तुकामः तत्र तेषां नेतारं श्री ई०एम०एस० नम्बूदरीपादमहोदयं सङ्गतवान् यस्तत्रस्थः सुप्रसिद्ध-साम्यवादिदलस्य नेता वर्त्तते। तत्रोभयोर्मध्ये यः संवादः प्रादुरभवत् तमेवाऽहमत्र भवतां पुरस्तात् समुपस्थापयामि।

## तुलसी-नम्बूदरीपादसंवादः

**तुलसीदासः**–त्वं तु परशुरामस्य उत्तमकुलेऽपि संभूतः सन् कथं नास्तिकः सञ्जातः?

**नम्बूदरीपादः**–वयं ज्ञानमार्गिणः। यत् नव्यं मार्क्सवादज्ञानं वर्त्तते तेनैव दुःखत्रयाभिघातं कर्तुं सक्षमाः। वयं च वर्गविहीनं समाजं स्थापयितुं कामयामहे।

**तुलसीदासः**–कीदृशो वर्गविहीनः समाजः?

**नम्बूदरीपादः**–तदेव यद् भवताऽपि समर्थितो वर्तते। तद्यथा–

**सियाराममय सब जग जानी।**
**करौ प्रणाम जोरि जुग पानी।।**

वयं साम्यवादिनोऽपि भवादृशा इव उच्चावचं भेदं न मन्यामहे। भवानपि तु अघोषितः साम्यवादी एव वर्त्तते।

**तुलसीदासः**–तव किं ध्येयम्?

**नम्बूदरीपादः**–तदेवाऽस्माकमपि ध्येयं यद् भवतः ध्येयमस्ति–'रामराज्यस्य स्थापना'–यतोहि–

**दैहिक दैविक भौतिक तापा।**
**रामराज्य काहू नहिं व्यापा।।**

**तुलसीदासः**–कथं भवान् एतावत् संघर्षान्दोलनादिकं च करोति?

**नम्बूदरीपादः**–तदेव भगवन्! वयं कुर्महे यद् भवन्तोऽपि वाञ्छन्ति। यथा–

**जासु राज प्रिय प्रजा दुखारी।**
**सो नृप अवस नरक अधिकारी।।**

भारतेऽस्मिन् वयं दुःखदायिनीं राजसत्तां विविधैः संघर्षैः प्रदर्शनैरान्दोलनादिभिश्च समुत्पाट्य भवत्कथाऽनुसारमेव तां नरके प्रक्षेप्तुं कामयामहे।

तदनन्तरं तुलसीदासः आन्ध्रप्रदेशं गतवान् तत्राऽकस्माद् एव तत्रत्यो मुख्यमन्त्री श्री एन०टी० रामारावमहोदयो दृष्टिपथमागतः। तदा तत्रोभयोर्मध्ये यः संवादः समभवत् तदेवाऽहम् अक्षरशो भवतां पुरः प्रस्तौमि।

## तुलसी-रामारावसंवादः

**तुलसीदासः**–किं त्वं पुरा भगवतो रामस्याऽभिनयं चलचित्रेऽकरोः?

**रामारावः**–सन्तप्रवर! भवत्कृते एव मया रामरूपं गृहत्वा अद्यत्वे ये खलु राक्षसस्वरूपा नेतारो वर्तन्ते ते विनाशिताः। सम्प्रत्यत्र प्रदेशे रामराज्यो वर्तते।

**तुलसीदासः**–पूर्वम् अत्रैव दक्षिणप्रान्तेषु श्री राजगोपालचारी, श्रीनिवासशास्त्री–टी० प्रकाशमप्रभृतयो नेतारोऽभूवन्। परन्तु कथं त्वं चलचित्रेषु अभिनयं कुर्वाण एव राजसत्तां प्राप्तवान्?

**रामारावः**–प्रभो! बुद्धिजीविनो भीरवो भवन्ति! राजनेतारश्च कुख्याताः सन्ति। वयं चलचित्रस्याभिनेतारो रामरूपं गृहीत्वा राक्षसान् नाशयामः। तमिलनाडुप्रदेशे शिवाजी गणेशन्–जयललिता च वर्त्तेते। तथा च कर्नाटक-प्रदेशेऽपि राजकुमारनामाऽभिनेता संघर्षं करोति।

हे सन्तप्रवर! भवान् दक्षिणादिशम्परित्यज्य उत्तरदिशं गच्छन्तु। यतो हि भवान् जातिवादी, ब्राह्मणवादी, भाग्यवादी, स्वर्ग-नरकवादी, सामन्तवादी, हरिजनविरोधी, नारी-विरोधी च वर्तते। अत्र च ब्राह्मणाः सत्ताविहीनाः सन्ति। अथवा भवान् मम वातानुकूलिते कुटीरे कतिचिद् दिवसानि उषित्वा पुनः रामकथायाः अभिनवां रचनां करोतु।

**तुलसीदासः**–त्वम् आत्मानं संन्यासिनं मन्यसे? हे रामाराव! महामूल्यवन्ति वस्त्राणि परिदधासि, वातानुकूलिते भवने निवसन् कुटीरवासी भवसि, तवाऽयं साधुवेशस्तु अत्यन्तं व्ययसाध्यो वर्तते।

**रामारावः**–महाकवे! अत्र तु पुनरपि किञ्चित् समीचीनमेव। उत्तरस्यां दिशि स्थिताः संन्यासिनस्तु इतोऽप्यधिका व्ययसाध्या वर्तन्ते। तेषां व्यक्तिगतं वायुयानं भवति। भुशुण्डीनां कार्यशाला वर्तते। ते च सदैव कन्याभिः परिवृताः सन्तः सुरां सेवन्ते। तादृशामेव चरणे नेतारोऽपि स्वकीयानि शिरांसि नमयन्ति।

**तुलसीदासः**–अस्तु, रामाराव! अहम् उत्तरभारतं गच्छामि। दक्षिणे पुनः कदाचिद् आगमिष्यामि।

## तुलसीदासस्य उत्तरभारते प्रस्थानम्

यदा श्रीतुलसीदासः उत्तरभारते आगच्छति स्म तदा तेन दृष्टं यत् एकस्मिन् नगरे केचन छात्राः कामपि कन्याम् पथि उद्वेजयन्ति स्म तथा च निकटस्था पथिकाः एवं गच्छन्ति स्म यथा तैः तत्सर्वं दृष्टम् एव न। अन्ततः महाकविः कञ्चित् पुरुषम् पप्रच्छ–

**तुलसीदासः**–अरे! अत्र नारीणां निरादरो भवति, तासां चाऽपमानं विलोक्याऽपि भवन्तः किमपि न कुर्वन्ति। किं यूयं सर्वे नपुंसकाः वर्त्तध्वे?

**पुरुषः**–भवान् साधुः वर्तते। न किमपि व्यावहारिकी बुद्धिं दधाति। अरे महाराज! इमे छात्राः हस्तक्षेपे कृते युद्धं कर्त्तुं समीहन्ते।

तच्छ्रुत्वा तुलसीदासः समीपस्थं राजपुरुषं सम्बोध्य पृच्छति यत् त्वं कथं न एतान् छात्रान् निवारयसि एतस्मात् दुष्कृत्यात्?

**राजपुरुषः**–भगवन्! किं वयं कुर्याम? इमे छात्राः कुलीना वर्तन्ते। यदि वयं किमपि छात्रं निगृहीतमपि करिष्यामस्तदा तत्क्षणमेव छात्राणां विरोधप्रदर्शन-नारा-भाषणादिकं च केनाऽप्यन्य-समस्या-व्याजेन प्रारप्स्यते नगरं चेदम् अशान्तिक्षेत्रं भविष्यति। यदि चाऽव्यस्थाशमनाय दमनाय वा कोऽपि पुलिसनिरीक्षकः अधिकारी व हस्तक्षेपं कुर्यात् तदा नेतृणाम्प्रभावेण तस्य निलम्बनमपि भवेत्। यतोहि राजनेतार एव इमान् पालयन्ति।

तत्सर्वं श्रुत्वा दुःखितः तुलसीदासः शनैःशनैः पादन्यासेन गच्छन् एकस्मिन् विश्वविद्यालयपरिसरे प्रविष्टवान्। तदानीमेव कश्चित् प्राध्यापकः तस्य दृष्टिपथमागतः। तुलसीदासः तं सविनयम् एवम् पप्रच्छ–

भवांस्तु सम्प्रति सम्पन्नः प्राध्यापको वर्तते। वातानुकूलितं भवनं' फ्रिजयन्त्रम्, कूलरयन्त्रम्, नानाफर्नीचरसमन्वितं' विवधोद्यानपरिवृतं च सुरम्यम् आवासस्थानम्प्राप्य मन्ये भवान् अत्यन्तं मनोयोगेनाऽत्र छात्रान् अध्यापयति।

**प्राध्यापकः**–'भगवन्! विविधसुविधासामग्रीः प्राप्याऽपि न स्वयं वस्तुतः छात्रान् पाठयामः। यस्मिन्नेव दिनेऽस्माकं सेवायां स्थायित्वं क्रियते तद्दिवसादेव अध्ययनाऽध्यापनं समाप्तं भवति। यद् अस्माभिः पठितं तदपि विस्म्रियते। वयं दलं (गुटं) निर्माय परस्परं युध्यामहे। छात्रनेतारोऽपि कक्षायाम् अध्यापनं न समीहन्ते। अन्यथा विश्वविद्यालयस्य प्राङ्गणे तेषां भाषणानि कः श्रोष्यति?'

तदानीमेव तत्र द्वित्राश्छात्रनेतारोऽपि समागताः। तुलसीदासं विलोक्य ते ऊचिरे–"किं भवान् तुलसीदास एव वर्त्तते? वेशन्यिासेन तु भवान् स एव

प्रतीयते। अस्तु भवता कथम् एतावत् कठिनं काव्यं कृतम्?"

**तुलसीदासः**–मया तु सरलमेव निर्मितम्।

**छात्राः**–न हि भो! तत् तु महत् कठिनं वर्तते। 'गीतावली' पाठ्यक्रमे वर्त्तते। छात्रास्तत्र काठिन्यमनुभवन्ति अतस्तत् पुनः सरलया गिरा लिख्यताम्।

**तुलसीदासः**–काव्यं तु भवादृशाणाम् एवं कथनेन न शक्यते लिखितुम्।

**छात्राः**–त्वया लिखितव्यं भविष्यति। कथं न लिखिष्यसि? अन्यथा विश्वविद्यालयपरिसराद् एतस्मात् गन्तुमपि न शक्नोषि। अत्रैव वयं भवतः हस्तपादयोः अस्थिभङ्गं विधास्यामः।

**तुलसीदासः**–किं यूयं मां केवलं साधुमेव मन्यध्वे? अहं तु काश्यां पुराकाले मल्लशालां निर्मितवान्। अहं गुण्डानां कृते गुण्डा भवामि। यदि युष्माकं समीपे छुरिकादिकं स्यात् तर्हि निःसार्य..... नो चेत्.....।

**छात्राः**–'ताडयत मारयत साधुम् एनम्।'

तदनन्तरं ते छात्राः तुलसीदास्योपरि आक्रमणं प्रारब्धवन्तः। तद् विलोक्य तुलसीदास एकं छात्रं क्षणेनैव पराजित्य तं बबन्ध।



**तुलसीदासः**–यूयं केवलं मृत्तिकासिंहा वर्तध्वे। यूयं तु भ्रष्टास्तथा च छात्रत्वव्याजेन केवलं विलासोपार्जका अर्थोपार्जकाश्च भवथ। यूयम् अस्माकं किमपि अनिष्टं कर्त्तुं समार्थ्यं न धारयध्वे।

**छात्राः**–(किञ्चित् लज्जिता भूत्वा) महाराज! नाऽत्र अस्माकं कोऽपि दोषः। वस्तुतस्तु अस्माकं राजनेतारो बुद्धिजीविनः, धर्माचार्याः अध्यापकाश्च सर्व एव भ्रष्टाः पतिताश्च। एतस्मिन् वातावरणे वयं किं शिक्षेम?

**तुलसीदासः**–विचित्रोऽयं युष्माकं तर्कः। अरे! यदि तव पिता अन्धकूपे पतितो वर्त्तते तर्हि किं त्वमपि तत्र पतिष्यसि? युष्माभिः युवकैस्तु स्वपितरोऽपि कूपात् निःसारणीयाः।

तत्सर्वम् आकर्ण्यं छात्राः तूष्णीम्बभूवुः। तदनन्तरं तुलसीदासः भारतवर्षस्य दुर्दशया महादुःखितः सन् प्रोवाच यत् मम मनः साम्प्रतमत्र न रमते। पुनः कदाचिदागमिष्यामि। इति चोक्त्वा स सहसा अन्तर्हितः सञ्जातः।



# सेवासाक्षात्कार-रहस्यम्

(१)

किंनामधेयो भवान्?
अहं प्रकाशचन्द्रः।
का योग्यता भवतः?
बी०काम० प्रथमश्रेण्याम्।'
टङ्कणकार्यं (टाइप) जानासि?
जानामि, तस्य परीक्षाऽपि समुत्तीर्णा।
शीघ्रलेखनं (शार्ट हैण्ड) जानासि?
तत् तु न जानामि।
तर्हि अस्मिन् सेवाकार्ये नियुक्ति र्न भविष्यति।
कृपया गच्छतु भवान्।

(२)

किंनामधेयो भवान्?
कृष्णमूर्तिः।
का योग्यता?
एम० काम०, प्रथमश्रेण्यां प्रथमं स्थानम्।
टङ्कणकार्यम्, अशुलिपिं च जानासि?
जानामि, तयोः परीक्षाऽपि उत्तीर्णा।
इतः पूर्वमपि कुत्रचित् कार्यं कृतवान् न वा?
कार्यं तु कुत्रचिदपि न कृतवान्।
तर्हि गच्छतु भवान्। अत्र तु अनुभविनां मनुष्याणाम् आवश्यकता वर्त्तते।

(३)

किंनामधेयो भवान्?
सुभाषचन्द्रः।
का योग्यता भवतः?
हाईस्कूल-परीक्षा तृतीयश्रेण्याम् उत्तीर्णा।
टङ्कणकार्यं जानासि?
नैव जानामि।
आशुलिपिं जानासि?
आशुलिपिः! अस्य कोऽर्थः?
अस्तु कदाचित् पूर्वमपि कार्यं कृतवान्?

कार्यम्! कीदृशं कार्यम्?

'तव उत्तरदानस्याऽयं प्रकारः न समीचीनः' कुपितः साक्षात्कर्त्ता उवाच।

'तवाऽपि प्रश्नकरणस्याऽयं प्रकारो मह्यं न रोचते। अहन्तु रामचन्द्रन् महोदस्य कथनाऽनुसारम् इहाऽगतः, अन्यथा नाऽऽगमिष्यम्' इति क्रुद्धः सन् सः अभ्यर्थी प्रत्युवाच।



रामचन्द्रन् महोदयस्य नामधेयमाकर्ण्य साक्षात्कर्त्ता सहसा कोपम्परित्यज्य तमभ्यर्थिनम् एवम् अवादीत्-

'अरे त्वया पूर्वं कथं नोक्तं यदहं रामचन्द्रन् महोदयेन प्रेषितः। अस्तु, श्वस्तनाद् दिवसात् कार्यालयमागत्य कार्य-भारं गृहाण'।

असावभ्यर्थी च साऽभिमानं साक्षात्कारं दत्त्वा प्रहृष्टः सन् बहिर्जगाम।

●

# प्रतिवेशिनीनां पीडा

पूर्वम् आवासक्षेत्र-(मोहल्ला) निवासिनीनां प्रतिवेशिनीनां कृते इदमतीव दुःखकरम् आसीद् यद् योऽयं नवीनः भाटक-(किराया) दायकः श्री तिवारी महोदयः समागतः तस्य पत्नी अत्यन्तम् उच्छृङ्खला कद्व्यवहारा, चरित्रहीना लज्जाविहीना च वर्त्तते। सा तु किञ्चित्कालमपि स्वप्रतिवेशिनीनां समीपे नोपविशति येन परस्परकर्णेजपन-निन्दादिद्वारा ताः सन्तोषं शान्तिं च प्राप्नुयुः? न जाने आत्मानं किम् मन्यते।

अस्तु, श्रीमती तिवारी महोदयाया एतेन अभद्रव्यवहारेण ताः प्रतिवेशिनीमहिलास्तु तथा पीडिताः सन्ति यत् तासां प्रत्येकं वार्तालापप्रसङ्गस्तत्रैव समागत्य विरमति। तद् यथा–

(१) 'महार्घता अत्यन्तं वृद्धिं गता।'

'न हि भो! न तु महार्घताऽपितु दरिद्रता वृद्धिं गता।'

'न हि भो महार्घतैव वर्धिता।'

'न हि नहि, दरिद्रतैव वृद्धिं गता।'

'अस्तु दरिद्रतैव वृद्धिं गता स्यात्। देशे किमपि तु वर्तते यत खलु वृद्धिं गच्छति।'

'आम् अधुना त्वं तथ्यं कथयसि। देशे तु वस्तुतः दरिद्रतैव वर्धते। यदि दरिद्रता न अवर्धिष्यत तर्हि त्वमेव वद यदियं श्रीमती तिवारी स्वलज्जां कथं विक्रीतवती?'

(२) 'किं भो! भगिनि! कार्यं परिसमाप्तम्?'

'अयि! कार्यं तु मरणोपरान्ते एव समाप्स्यते। त्वमेव वद किमहं मृतवती?'

'अहो! कष्टम्, कथमेवम् अशुभं निःसारयसि मुखात्? तव शत्रवो म्रियन्ताम्। त्वं श्रीमती तिवारीवत् चरित्रहीना तु नाऽसि।'

(३) 'किं भो! कः समाचारः?'

'सर्वं समीचीनमेव वर्तते।'

'हे भगवन्! अद्याऽसौ कथं वदति? सर्वं समीचीनं वृत्तं कथयति?'

'किं भो! किं किमप्यसमीचीनमपि सञ्जातम्?'

'एतत् पृच्छ यत् किं नाऽभूत्।'

'अस्तु तर्हि किं नाऽभूत्?

'अरे अस्मिन् महार्घताकालेऽपि कस्याऽपि समाचारः कथं साधुः सम्भाव्यते?'

'आम्, साधुरपि संभाव्यते समाचारः।'

'अस्तु, तदप्यहं मन्ये। किन्तु श्रीमती-तिवारी-महोदयायाः निर्लज्जतां विलोक्याऽपि कस्यचित् समाचारः किं साधुः भवितुर्महति?'

(४) 'अयि भगिनि! किमपि श्रुतं भवत्या?'

'न हि भो, किमभूद् अद्य विशिष्टम्?'

'अद्य मार्गे एका दुर्घटना सञ्जाता।'

'एवं नु किल! किमभूत् तत्र?'

'स्कूटरचालकः सद्य एव दिवंगतः।'

'अहो! दुःखम्, भवत्याः पतिरपि तु स्कूटरेणैव कार्यालयं गच्छति?'

'भवत्या अपि तु तेनैव गच्छति।'

'आम्, तर्हि चल मन्दिरे। तत्राऽऽवां सहैव गत्वा प्रार्थयावः यद् आवयोः पतिभ्यां समं काऽपि दुर्घटना न भवेत्।'

'न हि भो! यदि प्रार्थनैव करणीया स्यात् तर्हि इमां प्रार्थनां करिष्यावहे यद् अस्माकं पतिः दुर्घटनायां म्रियाद् वा न वा किन्तु श्रीमती तिवारीमहोदयायाः पाशेषु न पतेत्।' इत्यादि।

अथ प्रतिवेशिनीनां सा पीड़ा तु एकस्यां निशि तथाभूतां वृद्धिमुपागमद् यदस्माकमपि कृते तत्सर्वमनिर्वचनीयमेवाऽभवत्। पुनरपि श्रूयतां भवद्भिः सकलं तद्वृत्तान्तम्।

तस्यां निशि इदमभूद् यत् प्रायः नववादनपर्यन्तं श्रीतिवारीमहोदयः स्वभार्ययाऽनुमतः स्वप्रतिवेशिभ्यश्च सौप्रस्थानिकम् (विदाई) आदाय किञ्चित् कार्यवशात् पाटलिपुत्रं प्रस्थितः। गृहे च यतो हि श्रीमती तिवारीमहोदया एव एकाकिनी बभूव अतः तस्या गृहस्य विद्युद् बल्वं दश वादनपर्यन्तमेव शान्तं बभूव।

किन्तु अधुना एकघण्टापर्यन्तः समयोऽपि नैव व्यतीत आसीत्–एतन्मध्य एव तस्या गृहस्य विद्युद् बल्वं पुनः प्रकाशितमभवत्। तत्र काचित् प्रतिवेशिनी तत्सर्वं निपुणं विलोक्य एकामन्यां प्रतिवेशिनीं सद्य एव प्रतिबोध्य स्वमनोनुरूपं यथासन्देहं किमपि जल्पनं कृतवती। तदनन्तरं ते उभे अपि अन्याः प्रतिवेशिनीः प्रतिबोध्य किञ्चित् कथयामासतुः। तदनन्तरं तासां सर्वासां मध्ये निम्नवत् वार्तालापः प्रारब्धः–

'हे राम! तिवारी महोदयस्तु कार्यवशाद् बहिर्गतः किन्तु निर्लज्जा इयं तु परपुरुषैः समं स्वैरं विहरति।'

'अहं तु पूर्वमेव सन्दिग्धमानसा अभूवम्। अद्य च सम्प्रति रात्रौ विद्युद् बल्बमिदं प्रकाशितं दृष्ट्वा मम सन्देहस्तु पुष्टतामेव प्राप्तवान्।'

'निर्लज्जताया अपि सीमा भवति।'

'एवमपि कथं चारित्र्यहीनता?'

'कुलटा एव इयमस्ति, अपरं किम्?'

'तिवारी महोदयस्तु विचारम् अकरिष्यत् यद अस्माकं पत्नी अस्मत्कृते विरहातुरा भवेत् परम् अत्र तु......।'

'त्वं कथं मन्यसे यत् श्रीमती तिवारी महोदयायाः कक्षे कोऽपि पुरुष एव वर्तते?'

'किं तर्हि तस्याः पार्श्वे साम्प्रतं कोऽपि स्त्री भविष्यति?'

'किन्तु कश्चित् पुरुष एव स्याद् इति कथं वक्तुं शक्यते?'

'अस्मिन् समये पुनः विद्युत्प्रकाशस्य किं तात्पर्यं भवेत्?'

इदमपि तु संभाव्यते यत् श्रीमती तिवारी महोदया विद्युत्प्रकाशं निर्वाप्य शयितुम् आरब्धवती स्यात् किन्तु निद्रा नाऽऽगता भवेद् अतः किमपि पठनाय पुनः विद्युत्प्रकाशं कृतवती।'

'त्वं तु मूर्खावत् जल्पसे'.......इत्यादि।

एतस्मिन्नेवाऽन्तरे काचित् प्रतिवेशिनी श्रीमती तिवारी महोदयाया गृहस्य समीपे गत्वा अवहितकर्णाभ्यां किमपि श्रुत्वा तत्र तासां मध्ये समागत्य ब्रवीति–

'अहं तु तत्र तस्याः कक्षात् कस्याऽपि पुरुषस्य स्वरमाकर्ण्य अधुनैव आगच्छामि, उभावपि विहस्य वार्त्तां कुरुतः स्म।'

'हे भगवन्! कीदृशः समयः समागतः?'

'कलियुगः खल्वेषः।'

'तिवारी महोदयस्य तु दुर्भाग्यमेव वर्तते।'

'अहन्तु गत्वा स्वभर्तारं जागरयामि।'

'अहमपि गत्वा कथयिष्यामि।'

तदनन्तरं तासां मध्यतः काश्चिद् गत्वा स्व-स्व-पतीन् जागरयामासुः। ते सर्वे च प्रतिवेशिनः पुरुषाः एकत्रीभूय पुनः परस्परं वार्तां कर्त्तुं निम्नवत् प्रारब्धवन्तः–

'अद्य किमपि भविष्यत्येव।'

'आम्, अद्य तु किमपि भवितव्यमेव?'

'एतत् सर्वम् असमीचीनं वर्तते।'

'कथमपि न समीचीनम्।'

'चरित्रहीनताया अपि सीमा भवति।'

'अन्ततः अस्माकमपि तु पुत्र्यः बध्वश्च वर्तन्ते।'

'अपरं किम्?'

'अहो! स्त्रीणां तत् सीतासावित्रीवत् चारिंत्र्यं क्व गतम्?'

'पश्य, परपुरुषैः समम् इयं मुखं कृष्णं करोति......।'

'अस्तु, शान्तं कुरु।'

'कथं शान्तिः? अद्य तु किमपि भविष्त्येव।'

'नैतत् सर्वमत्र चलिष्यति।

'सत्यम् नैव चलिष्यति।'

'अद्य तु वयम् दुर्गन्धमेनं दूरीकरिष्यामहे।'

'अवश्यम्-अवश्यं तत्रैव चलितव्यम्।'

'बहु सञ्जातम् अत्र आवासक्षेत्रे (मोहल्लयां) साम्प्रतं किमपि करणीयमेव?'

तदनन्तरं सर्वे प्रतिवेशिनः श्रीतिवारी महोदयस्य गृहस्य सम्मुखे गत्वा स्थिता अभूवन्। गृहाऽभ्यन्तरात् तु वस्तुतः कस्याऽपि पुरुषस्य स्त्रिश्च परस्परं संलापः ईषद्हास्यध्वनिश्च प्रसरति स्म। अन्ततः कश्चित् प्रतिवेशी गृहद्वारस्य शृङ्खलां खटखटायमानः सन् सोच्चैः उक्तवान्–

'किं भो! कोऽपि गृहे वर्त्तते?'

ततः कक्षाऽभ्यन्तरात् आगम्यमाना वर्त्तालापध्वनिः हास्यध्वनिश्च सहसा शान्तो बभूव।

'पश्य, तूष्णीम् बभूवतुः।'

'खटखटायस्व द्वारं पुनः खटखटायस्व। असौ पलायितो न भवेत्।'

ततः प्रथमः प्रतिवेशी यथैव द्वारं पुनः खटखटायितुम् उद्यत एवाऽभवत् परन्तु एतस्मिन्नेवाऽन्तरे 'कोऽयम् भो!' इति शब्दोच्चारण-समकालमेव तद्द्वारम् उद्घाटितं सञ्जातम्।

'अरे! तिवारी महोदयः? भ.... वा..... न्!!!

'आम्, कथम्? किम् अभूत्?'

'किं भवान् पाटलिपुत्रं न गतवान्?'

'एवम्, अहं गन्तुं नाऽशकम्। यदैव पाटलिपुत्रगमनाय रेलवेस्टेशनं प्राप्तवान् ततः किञ्चित् कालपूर्वमेव ट्रेनयानं प्रस्थितमभूत्। अतोऽहं गृहं प्रतिनिवृत्तः। परन्तु का वार्त्ता वर्तते? एतावन्तः पुरुषाः भवन्तः....।'



'न हि किमपि न हि, विश्राम्यतु भवान्।'

तदनन्तरमेव सर्वे प्रतिवेशिनो घोरनिराशतामापन्नाः प्रतिनिवृत्ताः। श्रीमतीतिवारीमहोदयायाः चारित्र्यहीनतायाः सम्बन्धे तेषां कष्टं सम्प्रति समाप्तं सञ्जातं किन्तु तस्य स्थाने एकं नवीनं कष्टं मनःपीडा च भवितुं प्रारब्धा। तच्च तेषां निम्नवार्त्तालापेन शक्यते ज्ञातुम्–

'अहो! स तु तिवारी महोदय एव निःसृतः।'

'पश्य कीदृशः युगः समायातः।'

'किम् इयमपि काचिद् वार्त्ता वर्त्तते।'

'अहन्तु श्रीमती तिवारीमहोदयया एवंविधाम् आशां नैव कृतवान्।'

'आम् पश्यन्तु भवन्तः स तु तिवारी-महोदय एव निःसृतः–न तु कश्चिदन्यः पुरुषः।'

तदनन्तरं च यदा सर्वाः प्रतिवेशिन्यो महिलाः इदं ज्ञातवत्यः यत् स तु तत्र तिवारीमहोदय एव आसीत् तदा ताः अपि तथैव भृशं दुःखग्रस्ताः भूत्वा स्वमनःपीडाम् एवम् अभिव्यक्तां कुर्वत्यः परस्परं संलापं क्रियमाणाः दृश्यन्ते स्म।

'अयि! भो! स तु तत्र तिवारीमहोदय एवाऽभवत्।'

'हे भगवन्! पश्य स तु तिवारी एव निःसृतः।'

'कः खलु समयः समायातः?'

'घोरः कलियुगः समायातः भगिनि!'

'कुलटा एव सा तु।'

'हे राम! तत्र तु परपुरुषः न निःसृतः।"



# अँग्रेजीभाषकः सुतः

तस्य माता मलिनं धौतवस्त्रं परिदधाना एकस्मिन् पात्रे गृहनिर्मितम् एककिलोपर्यन्तं शुद्धं घृतम्, अथ च तस्य जनकः कथमपि परिश्रमं कृत्वा समुपार्जितानि सहस्रं रूप्यकाणि नीत्वा नगरे अध्ययनं कुर्वाणस्य स्वपुत्रस्य रमेशस्य छात्रावासे समाजग्मतुः।

यतो हि तदानीं छात्रवासस्य तत्कक्षे विष्कम्भकम् (तालायन्त्रं) संलग्नम् आसीत्, अत एव तौ उभावपि तत्रैव बहिरङ्गकोष्ठे (वरामदायां) स्थित्वा प्रतीक्षानिरतौ बभूवतुः।

शनैः शनैश्च सायंकालीनाऽन्धकारे सम्प्रवृत्ते डिस्कोध्वनिम् अनुसृत्य गानं कुर्वाणो रमेशः कक्षस्य द्वारम् उद्घाटयामास। तत्र चाऽकस्मादेव तस्य दृष्टिः पित्रोरुपरि पपात।

'अहो! युवां..... कथम् अत्र....?' इति साश्चर्यं रमेशोक्तिसमकालम् एव तस्य सहाध्यायिनौ मिडीवस्त्रं परिदधाना मिस मार्गरेट तत एव गच्छन्ती रमेशम् उक्तवती–'हैलो, रमेश! हू आर देयर? (कौ इमौ?)

'दे आर फैमिली सर्वेन्ट्स फ्राम द विलेज' (इमे पारिवारिका भृत्याः ग्रामाद् आगताः) इति रमेशवचनमाकर्ण्य पित्रो र्नयनाभ्याम् अश्रूणि महाप्रसन्नतया विनिर्गतानि यद्–अहो! अस्माकं सुतः अंग्रेजी-भाषामपि वक्तुं प्रारब्धवान्।

●

# निमन्त्रण-पत्र प्राप्तेः अनन्तरम्

विद्वांसः कथयन्ति यद् 'अनाहूतस्तु भगवतो गृहेऽपि न गच्छेत्।' इदञ्च सत्यमेव यत् यदि भवान् क्वचिद् अनाहूतः सन् सम्बन्धमात्रवशात् आत्मीयं मत्वाऽपि गच्छति तदा आतिथेयाः अवहेलनामिव कुर्वाणाः प्रायः विचित्रभावेन भवन्तं पश्यन्ति।

इदमेव कारणं वर्तते यत् साम्प्रतं कश्चिदपि क्षुद्रो विशालो वा समारोहो भवेत् किन्तु निमन्त्रण-कर्त्तारः तस्य समारोहस्य निमन्त्रण-पत्राणि मुद्राप्य आमन्त्रितेभ्यः सज्जनेभ्यो यथाविधि प्रेषयन्ति। कस्याऽपि जन्मदिवसः स्यात् मरणदिवसो वा, तिलकोत्सवः स्याद् विवाहो वा, गृहनिर्माणोत्सवः स्याद् गृहप्रवेशो वा, पुरस्कारवितरणमहोत्सवः स्यत् पुस्तकविमोचनसमारोहो वा सर्वत्रैव निमन्त्रणपत्राणि प्रदीयन्ते।

तात्पर्यमेतद् यद् बहुवारं मौखिकरूपेण निमन्त्रितेऽपि साम्प्रतं जना निमन्त्रण-पत्रप्राप्तिं विना समारोहे उत्सवे वा गमने विश्वासं नैव कुर्वन्ति।

श्रूयते यद् दुग्धदग्धः तक्रमपि फूत्कृत्य पिबति। एकदा अहं समाचारपत्रे कस्यचित् समारोहस्य निमन्त्रण-विज्ञापनम् अधीत्य तत्र गतवान्। गत्वा च सभागारे सोत्सोहं प्रथमपंक्तौ समुपविष्टवान्। तत्रत्याः प्रबन्धकाः पूर्वं तु अधिकश्रोतृणाम् आगमनं नैव अशंसन्ते स्म किन्तु यदा आशाधिकाः श्रोतारस्तत्र समागतास्तदा सभायाः व्यवस्थापनाय ते सर्वेषां श्रोतृणां निरीक्षणं कुर्वाणास्तेषां निमन्त्रण-पत्राणि द्रष्टुम् आरब्धवन्तः। तत्र ये मादृशाः श्रोतारो निमन्त्रणपत्रविहीना आसन् तेषां का गतिस्तदा बभूव इति वर्णनं तु मन्ये भवादृशेभ्यः सुविज्ञपाठकेभ्यो व्यर्थमेव वर्त्तते। तदानीन्तनादेव मया निर्णीतं यत् यावत्पर्यन्तम् औपचारिकरूपेण निमन्त्रणपत्रमहं न प्राप्नुयां तावत्-पर्यन्तं क्वचित् समारोहे पदमपि न धरिष्यामि।

अद्य तु यदाऽहं विद्यालयाद् गृहं समागतस्तदा डाकद्वारा पञ्च निमन्त्रण-पत्राणि प्राप्तानि। अस्तु, चायपानं कुर्वाणः अहं तानि निमन्त्रण-पत्राणि शनैः शनैः द्रष्टुम् पठितुं च आरब्धवान्।

तत्र प्रथमं निमन्त्रणपत्रं स्थूलकृष्णरेखया परिवृतं कस्याऽपि देहान्तवृत्तान्तसूचकम् अभूत्। अहो! स तु अस्माकम् एक प्राचीनः सहाध्यायी बभूव। कष्टमेतद् स असामयिकं मृत्युमुपागमत्। ईश्वरेच्छा बलीयसी। अस्तु तत्र मम गमनेन कश्चिदपि अन्तरो भवितुं न शक्नोति। मरणधर्मा तु मृत एव, एतावद् दूरे गमने व्यर्थमेव पञ्चशत-रूप्यकाणां हानिर्भविष्यति। समवेदना-पत्रलेखनेनाऽपि कार्यं चलिष्यति–इति विचार्य मया तत्र गमनविचारो निरस्तः।

अथ द्वितीयं निमन्त्रणपत्रं वैवाहिकम् अभूत्। पत्रेऽस्मिन् सूचितं यत् अस्माकं पत्न्याः भ्रातृजायायाः भागिनेय्याः विवाहो वर्त्तते। इदमपि निमन्त्रणं व्ययसाध्यम् आसीत्। अहं पत्नीम् आहूय एवम् उक्तवान्–

'अयि! शृणोषि।'

सा महानसे शाकं कर्तयति स्म। हस्ते छुरिकां दधाना स तत्क्षणमेव मत्समक्षम् उपस्थिताऽभवत्।

'कथय किं वक्तव्यम्?'

'तव भ्रातृजायाया भागिनेय्या विवाहस्य निमन्त्रणपत्रम् आगतमेतत्।'

'अथ को विचारो भवताम्?'

'मम विचारे यदि तत्र गमनं न स्यात् तर्हि का हानिः?'

'अस्मदीयाः सम्बन्धिनः कथं भवते रोचिष्यन्ते?' सभ्रूभङ्गं सा प्रत्युत्तरं ददौ।

'न हि प्रिये! त्वमेव पश्य, कन्याया विवाहो वर्त्तते। न्यूनतो न्यूनमपि सहस्रद्वयं व्ययं भविता। तव शाटिका चाऽप्यस्मिन् मासे क्रेतव्या वर्त्तते। यदि च तत्रस्थः कोऽपि मेलिष्यति तर्हि कथयिष्यामहे यत् भवतां निमन्त्रणमेव न प्राप्तम्।'



'अस्तु, यथा भवान् इच्छति' इत्युक्त्वा साऽपि तत्र 'स्वशाटिका-विचारमाकर्ण्य समर्थनपुरःसरं सहमतिं प्रदत्तवती।

तदनन्तरमहं तृतीयं निमन्त्रणपत्रम् उद्घाटयामास। तच्च पठित्वाऽहं पत्नीम् उवाच–

'अहो! इदमपि व्ययसाध्यं निमन्त्रणपत्रम्। एकस्य सुहृदः पुत्रस्य जन्मोत्सवो वर्त्तते। किं तत्र रिक्तहस्तौ गमिष्यावः?'

'अरे! तत्र तु वर्धापनत्वरित-(तार) पत्रम् एव प्रेष्यताम् पत्नी प्रत्युवाच।'

'हाँ, तवाऽयं विचारः समीचीनः। मन्ये त्वं तु अतीव बुद्धिमती सञ्जाता।'

अथ चतुर्थं निमन्त्रणपत्रं दृष्टवान्। इदञ्च एकस्याः साहित्यसभायाः बभूव। तत्र कस्याऽपि कथासंग्रहस्योपरि विचारगोष्ठ्याः निमन्त्रणम् आसीत् तद् विज्ञाय पत्नी कथयति–

'त्यज भो! तत्र गमनविचारम्। लेखकाः साहित्यकाराश्च दरिद्रा बुभुक्षिताश्च भवन्ति। केवलम् एक-कप-चायं प्रदाय निवर्तयिष्यन्ति। व्यर्थमेव तत्र तव गमनम्' इति। तच्छ्रुत्वा चाऽहमपि तस्या विचारं समर्थयामास।

अत्राऽन्तिमं पञ्चमं च निमन्त्रण-पत्रम् लक्ष्मणपुरस्थ–आकाशवाण्याः कविसम्मेलनस्याऽभवत्। तत्र च प्रथमश्रेण्याः मार्गव्ययपुरःसरं द्विसहस्ररूप्यकाणां प्रदानस्य सूचनाऽपि लिखिता आसीत्।

तदेव पञ्चमं निमन्त्रणपत्रं मया सुरक्ष्य 'मम वस्त्रेषु प्रैसं कारयित्वा तानि अटैचीमञ्जूषायां स्थापय, परश्वस्मिन् दिवसेऽहं प्रातः लक्ष्मणपुरं गन्तास्मि' इत्युक्त्वा अन्यानि सर्वाण्यपि निमन्त्रणपत्राणि महानसे इन्धनरूपेण ज्वालयितुं भार्यायै समर्पितानि।

●

## अथ भार्यावशीकरणोपायाः

विगतग्रीष्मकाले मया भारतवर्षस्य बहवः प्रदेशा यात्रायां पर्यटिताः। तदानीमेव एकस्मिन् प्राचीने पुस्तकालये मम दृष्टिपथे एका प्राचीना जर्जरा च पाण्डुलिपिः समागता। पाण्डुलिपिरियं मया महता प्रयासेन पठिता। तत्र कस्यचित् मध्ययुगीनस्य आचार्यस्य कानिचित् सूत्राणि वर्त्तन्ते यानि ग्रन्थस्य 'दाम्पत्य-प्रकरणे' प्रदत्तानि। अस्य ग्रन्थस्य नामधेयं तु स्पष्टं नैवोपलभ्यते किन्तु पाठकानां हितसाधानाय सुखशान्ति-प्रापणाय च तानि सूत्राणि मया स्वोपज्ञभाष्यसहितं प्रस्तूयन्ते।

### अथ भार्यावशीकरणम् उच्यते।।१।।

**भाष्यम्**–विवाहस्य भेदान् भार्याणां च गुणाऽवगुणान् निरूप्य साम्प्रतम् आचार्यः तासां वशीकरणोपायं वर्णयितुकामः प्रवर्तते। तदेतत् वशीकरणसाधनं निम्नसूत्रदशकेन प्रवक्ष्यते।

### अकरणे नरकाऽवाप्तिः।।२।।

**भाष्यम्**–पत्नीवशीकरणं विना गृहं रौरवनरकसदृशं भवति। अतएव प्राज्ञैः अत्र प्रकरणोक्ता उपायाः सद्य एव विवाहाऽनन्तरम् अवलम्बनीयाः तदभावे पतयः घोरं कष्टं प्राप्नुवन्ति। तेषां भोजन-पानाऽऽसनोपवेशन-शयनादीनि कृत्यानि सहजतया सारल्येन च न प्रवर्तन्ते।

### रूपसौन्दर्यवर्णनम्।।३।।

**भाष्यम्**–संसारस्य प्रत्येका नारी स्वसौन्दर्यश्रवणोत्सुका भवति। इदमेव च तस्या दौर्बल्यम्। एतस्य दौर्बल्यस्य पूर्णो लाभः पतिभिः ग्रहीतव्यः। भार्यायां रूपसौन्दर्यराहित्येऽपि यदा कदा तस्याः प्रशंसा ध्रुवमेव करणीया। अनेनोपायेन कस्या अपि मानिन्याः मानभङ्गं शक्यते कर्त्तुम्। अत्राऽसफल्ये तु पुरुषस्यैव दोषो ज्ञातव्यः।

### श्वसुरालयप्रशंसनम्।।४।।

**भाष्यम्**–श्वाशुरालयस्य प्रशंसयाऽपि भार्याः वशीभूताः भवन्ति। जायायाः समक्षं तस्या मातुर्गृहस्य निन्दा कदाऽपि न करणीया। मातुर्गृहस्य कुक्कुरा गदर्भाश्चाऽपि तस्यै रोचन्ते। सा तद्विरुद्धं किमपि श्रोतुं न समीहते निन्दावाक्यानि च न सहते। ये चतुराः पुरुषाः स्वभार्यां वश्यां कर्तुमिच्छन्ति ते सदैव श्वशुरालस्य गुणान् एव गायन्ति (अनिच्छयाऽपि)। एवंविधमेव पतिं तस्य भार्या परमेश्वरम् इव पूजयति।

## नूतनवस्त्राऽऽभरणप्रदानम्।।५।।

**भाष्यम्**–नववस्त्रप्रदानेन अत्यन्तं रुष्टाऽपि जाया सद्य एव प्रसीदति। वस्त्राऽऽभूषणानि स्त्रीणां दुर्बलता भवति। शताधिकेषु शाटिकावस्त्रेषु सत्स्वपि ताः अन्यस्त्रीणां नवशाटिकां विलोक्य स्वमनसि नियन्त्रणं कर्त्तुं न प्रभवन्ति। इदमेव कारणं यद् दरिद्राः पुरुषा प्रेमविवाहे असफला भवन्ति। यतोहि प्रेयसीभ्यो नानावस्त्राऽऽभूषणादिप्रदानसन्दर्भे ते प्रायः किंकर्त्तव्यविमूढा भूत्वा नैराश्यमुपगच्छन्ति। अतएव समर्थैः पुरुषैः यदा कदा समये कुसमयेऽपि वा नववस्त्रप्रदानपुरःसरं ताः सन्तोषयितव्याः। सन्तुष्टायां च तस्यां यथेच्छं स्वकीयं कार्यजातं तासां सहयोगेन साधनीयम्।

## स्वादुहीनप्रशंसनम्।।६।।

**भाष्यम्**–वशीकरणप्रसङ्गे सूत्रमिदम् अतिवैशिष्ट्यं भजति। अस्याऽयम् अर्थो यत् स्वभार्यानिर्मितस्य स्वादुरहितस्याऽपि भोजनस्य प्रशंसा अवश्यं करणीया। स्वकीयकृत्यस्य (असुन्दरस्याऽपि) प्रशंसा कस्मै न रोचिष्यते? अत एव सुपतिभिस्तत्र विशेषेण ध्यातव्यम्।

## अन्यनारीविनिन्दनम्।।७।।

**भाष्यम्**–यः पतिः स्वगृहं स्वर्गसदृशं सुखकरं कर्त्तुं समीहते तेन स्वप्रतिवेशिनीनां परिचितानां वा सुन्दरीणां स्त्रीणां निन्दनं गर्हणं च यदा कदा अवश्यमेव करणीयम्।

स्वपत्न्याः समक्षं ये पुरुषाः परनारीणां कुमारीणां युवतीनां वा प्रशंसनं कुर्वन्ति ते विश्वस्य महामूर्खाः भवन्ति, स्वत एव च आपदः निमन्त्रयन्ति। गृहयुद्धप्रारंभाय अयमेव सहजः पन्था वर्त्तते। अतएव पुरुषैः अनिच्छद्भिरपि यदा कदा परिचितसुन्दरीणां निन्दा भार्यायाः समक्षम् अवश्यं करणीया (तस्या अनुपस्थितौ च शक्यते प्रेम्णा समालपितुं ताभिः सह)।

## दाक्षिण्यं दिनचर्यायाम्।।८।।

**भाष्यम्**–पतिभिः स्वदिनचर्या निपुणतया गोपनीया। यतोहि पुरुषाणां परस्त्रीषु कुमारीषु वा आकर्षणं स्वभावसिद्धं भवति, तज्ज्ञाने च गृहे महान् कलहः संभाव्यते अत एव चतुरैः पुरुषैः स्वा एवंविधाः दिनचर्याः साधुरीत्या गोपनीयाः। अन्यथा सर्वं वशीकरणं सहसा व्यर्थं भविष्यति।

## गृहे निर्णायिका सदा।।९।।

**भाष्यम्**–गृहकार्येषु भार्या सदैव अन्तिम-निर्णायिका-रूपेण प्रतिष्ठापनीया।

तत्समक्षं कदापि तस्य निर्णये विरोधो न कर्त्तव्यः। किन्तु सत्याम् आवश्यकतायां परोक्षे च यथामति गृहकार्यं सम्पादनीयम् प्राज्ञैः।

**गृहकार्यं यथाशक्ति।।१०।।**

**भाष्यम्**–पतिभिः कदाचित् स्वगृहकार्यमपि यथाशक्ति सम्पादनीयम्। यथा–वस्त्रप्रक्षालन-पात्रपरिमार्जन-सम्मार्जनीदानं च। येन भार्या आत्मानं भृत्यामिव न कल्पयेत्। अन्यथा अशान्तिः संभाव्यते।

**अन्ते चाऽर्थसमर्पणम्।।११।।**

**भाष्यम्**–पुरुषार्थचतुष्टये द्वितीयः पुरुषार्थः 'अर्थ' नामको भवति। तदेव लोके 'धनम्' इत्युच्यते। अर्थात् वेतनादिना प्राप्तस्य धनस्य समर्पणद्वारा भार्याः शीघ्रमेव वशीभूताः भवन्ति। तच्चाऽवश्यं करणीयं कल्याणमिच्छद्भिः पतिभिः।

(इति दाम्पत्यप्रकरणे स्वोपज्ञभाष्य-सहितानि भार्यावशीकरणसूत्राणि)।

•

# उच्चं तु पदम् एव

बुद्धिमत्यै रमायै यदा पण्डितमहोदयः एकं सम्बन्धसूत्रम् अन्विष्य विवाहार्थम् आनीतवान् तदा अहमपि तत्रैव उपस्थितोऽभूवम्।

रमायाः पितु र्निधनाऽनन्तरं तस्याः पितृव्येण श्रीरामदत्तमहोदयेनैव तस्या विवाहकृत्यं सम्पादनीयम् आसीत्। अतएव तेनैव सह तत्र पण्डित-महोदयस्य वार्त्ता भवति स्म। भावी वरः कस्मिंश्चिद् बैंक-कार्यालये आधिकारिरूपेण सेवारत आसीत्।

रमायाः पितृव्यः उच्चस्तरीयो ब्राह्मण आसीत्। स रमाया मातुः समक्षमेव पण्डितमहोदयम् उक्तवान् यत वरणीयः पुरुषः (भावी वरः) उच्चवर्गीयो ब्राह्मणो नाऽस्ति। अथ यदा सर्वोऽपि विवाहव्ययो मयैव कर्त्तव्यो वर्त्तते तदाऽहं निजभ्रातृव्याया विवाहम् अधमेन ब्राह्मणेन सह कर्त्तुं कथं शक्नोमि?' तत्पश्चादेव श्रीरामदत्तमहोदयस्तदा तं पण्डितमहोदयं तत्रैव एकान्ते नीत्वा न जाने तेन सह किं मन्त्रयामास।

अथ कालाऽनन्तरं श्रीरामदत्तमहोदयो रमाया विवाहं केनचिद् उच्चवर्गीयेण ब्राह्मणेन किन्तु साधारणेन दरिद्रेण लिपिकेन सह सम्पादयामास।

प्रायः एकवर्षाऽनन्तरं मया सुश्रीसुशीलायाः (श्री पं० रामदत्तस्य सुतायाः) विवाहस्य निमन्त्रणपत्रम् अधिगतम्। निमन्त्रणपत्रमासाद्य यथासमयं विवाहदिवसेऽहं तत्र गतवान्। विवाहाऽवसरे च तदानीम् अहम् एतद् विलोक्य नितराम् आश्चर्यचकितः सञ्जातो यत् तस्याः वरः स एव निम्नवर्गीयः किन्तु उच्चपदस्थो ब्राह्मणयुवको वर्तते यस्य विवाह-प्रस्तावो रमादेव्या समम् पूर्वम् अस्वीकृतः आसीत्।

आश्चर्यसमन्वितं तत्र मम मुखं विलोक्य संभवतः पं० रामदत्तेनाऽपि अनुभूतं यदहं तस्यं चातुर्यं ज्ञातवान्। अत एव स शनैः मम समीपमागत्य कर्णान्तिकम् उवाच–"भ्रातः! यद्यहं भ्रातुः पुत्र्याः विवाहम् अनेन पुरुषेण सह अकरिष्यं तदा जनाः माम् इदमेव अकथयिष्यन् यत् निम्न-स्तरीयेण ब्राह्मणेन सह विवाहं कारितवान्। किन्तु निजपुत्र्याः विवाहम् अनेन सह कृते सति कोऽपि मां किमपि न कथयिष्यति इति।"

•

# यौवनातीतस्य एका कथा

एकदा अहम् आपणमध्याद् गच्छामि स्म तदैव इदमनुभूतवान् यत मां युवतयो न पश्यन्ति, न च मयि रुचिं गृह्णन्ति। वृत्तमेतत् सर्वथा अस्मत्कृते नवीनमासीत् कष्टप्रदं च। नेदं पुरातनं वृत्तं यद् इतः पूर्वं यदाऽप्यहम् आपणे भवामि स्म तदा तु माम् अवलोकितुं युवतयो विरमन्ति स्म मन्दस्मितिपुरःसरं च ताः मां प्रेक्षन्ते स्म।

निःसन्दिग्धं वृत्तमेमतत् मत्कृते महत्कष्टदम् अभवत्। पूर्वसमयस्य तथाविध-समुत्कर्षाऽनन्तरम्पतनमेतत् मत्कृते चिन्तनीयं विचारणीयं च सञ्जातम्। अन्ततः कस्यचित् पुरुषस्य जीवने स्त्रीणां भूमिका महत्त्वपूर्णा भवत्येव।

श्रूयते यत् स्त्रीकारणादेव महाभारतं नाम प्रसिद्धं युद्धमभवत्। रामायणस्य मूलेऽपि तदेव कारणम्। केचन राजानस्तु स्त्रीणां कारणादेव स्वसिंहासनमपि त्यजन्ति। केचिच्च वानप्रस्थिनो भूत्वा वनेषु विहरन्ति। विगतेष्वनेकेषु युद्धेषु यत्र लक्षाधिका मानवा दिवंगतास्तत्र स्त्रिय एव प्रमुखकारणान्यासन्।

तात्पर्यम् एतद् यत् मनुष्यस्य व्यक्तिगतजीवने स्त्रीणां भूमिका अपरिहार्या एव। अत एव यदि तथाविधाभिः सुन्दरीभिरहम् अकस्माद् उपेक्षितो भवेयं तर्हि ममोद्विग्नताया अनुभवं कर्त्तुं मन्ये भवन्तः समर्था भवेयुः।

अस्तु, अहं विचारमग्नोऽभूवम्–हे भगवन्! किमिदं दुर्वृत्तं सञ्जातम्? इमा युवतयो माम् अधुना कथं न पूर्ववत् प्रेक्षन्ते? एताः किं वाञ्छन्ति? किमत्र च कारणम् उदासीनतायास्तासाम्? इत्येवं बहुविधमभिसन्धायाऽहं गृहम् आगत्य सर्वप्रथमं दर्पणस्य समक्षं स्थित्वा सावधानं निजाऽऽकृतिं निपुणं निरीक्षितुं प्रारब्धवान्। मयेदं तत्राऽनुभूतं यत् ममाऽऽकृतिः कस्यचिद् रुग्णस्य मानवस्येव प्रवर्त्तते। यतोहि मम चक्षुषोश्चैतन्यं चमत्कृतिश्च न वर्त्तेते। कपोलयोरपि च पीतिमा विराजते ओष्ठौ तु शुष्कतरौ भूत्वा प्रभावहीनौ सञ्जातौ।

अहो! इमयवस्था मम रूपस्य! अधुना मया ज्ञातं यत् कथं न सुन्दर्यः पश्यन्ति माम्। एवंविधे आकर्षणरहिते मुखे का दृष्टिपातं विधास्यति?

तदुपेक्षाकारणमनुमीय तद्दिने एवाऽहम् आपणं गतवान् शक्तिवर्धकपदार्थजातानि क्रेतुम्। तद्यथा पञ्च-किलोपर्यन्तं शद्धं घृतम्, किलोत्रयं गुरुकुलकांगड़ीनिर्मितं च्यवनप्राशम्, विटामिनानां विविधा गोलिकाः,

नानाविधफलानि च क्रीत्वा यदाऽहम् गृहम् आगच्छामि स्म तदैवाऽस्माकं गोपालकोऽपि दृष्टिपथे समागतः। तमप्यहं प्रत्यहम् एककिलोपर्यन्तं दुग्धम् अधिकं देयमिति निर्दिश्य गृहे समागतवान्।

अस्तु, एवम् अनेकविध-शक्तिवर्धक-पदार्थानाम् उपभोगं कुर्वाणस्य मम मासत्रयं व्यतीतम्। एकदा दर्पणे स्वप्रतिबिम्बं विलोक्य नितरां प्रहृष्टः सञ्जातः यत् कीदृशोऽहं हृष्टपुष्टश्चाऽभूवम्। मम कपोलयोः रक्ताभता वदनं प्रसन्नतरं वक्षःस्थलं विशालं बाहू च मांसलौ सञ्जातौ।

तत्सर्वं रुचिकरं प्रमोदास्पदं च विलोक्य तदनन्तरमेव तत्कालमहम्, आपणे विनिर्गतः। किन्तु दुःखं, महादुःखं यत् पुनरपि काचिदपि युवती न मयि दृष्टिं चिक्षेप नैव च काचित् सुन्दरी क्षणमपि ध्यानं ददौ।

अहं खिन्नमानसो व्यचारयं यत् प्रतीयते पुनरपि काचित् न्यूनता वर्त्तते मम देहे। मन्ये मम शरीरं सुगठितं न स्यात्। संभवतः शरीरे चापल्यं स्फूर्त्तिश्च न प्रतिभाति। युवतयोऽपि प्रायशः स्फूर्तिमन्तं चपलं च मनुष्यमेवाऽनुध्यायन्ति। संभवतः शक्तिवर्धक-पदार्थानाम् अधिक सेवनेन मम शरीरं स्थूलं गरिष्ठं च सञ्जातम् अतः व्यायामाद्युपायेन स्फूर्त्तिमत् सौष्ठवयुक्तं च कार्यम् इति विचार्य तत्क्षणमेवाऽहं पुनर्गृहं प्रतिनिवृत्तः।

ततः प्रभृति मया विविधा व्यायामाः प्रारब्धाः। बुलवर्कर-मुद्गर-प्रभृतीनि व्यायामसाधनानि क्रीतानि। भारमापकयन्त्रमपि क्रीत्वा प्रत्यहं प्रातः सायं निजभारं समीकर्त्तुं यथोचितं व्यायामम्प्रारब्धवान्। विविध-खेलसंघटनानां सदस्यताम् गृहीतवान्। शरीरवृद्धिनियन्त्रणाय सौष्ठवाय च पारिश्रमिकं विनैव प्रतिवेशिनाम् इन्धनकाष्ठानि परशुना विदारयितुम् आरब्धवान्। तेषां भारयुक्तान् पदार्थान् इतस्ततः नयामि स्म। प्रतिसप्ताहं नौकाविहारं कर्त्तुं प्रारेभे। प्रातः नदीषु घण्टाद्वयं तरणं प्रारब्धवान्। एतस्मिन्नेव प्रयासे एकदा मज्जनात् कथं कथमपि प्राणानपि रक्षितवान्।

एवं सर्वं कुर्वतो मम षण्मासा व्यतीताः। सम्प्रति मम प्रत्येकस्माद् अङ्गात् स्फूर्तिः, सौष्ठवम्, आरोग्यम् मसृणत्वं चाऽपि स्पष्टतया प्रस्फुटन्ति स्म। तत्सर्वं विलोक्य–इदानीम् अवश्यं मां युवतयो द्रक्ष्यन्ति सुन्दरीणां च दृष्टि-पथानामहं पुनः केन्द्रो भविष्यामि–इति विचार्य वक्षःस्थलम् उन्नमय्य सायंसमये सानन्दम् आपणे विनिर्गतः।

किन्तु कष्टम्! अहो!! महाकष्टम्!!! पुनरपि न काऽपि मां दृष्टुं प्रायतत। न च कयाऽप्येकवारमपि यथापूर्वं सस्मितम् मां विलोकनाय प्रयासः कृतः। किं

कारणं भवितुं शक्नोति यत् अधुनाऽपि स्त्रियो मयि नाऽकृष्टा भवन्ति? विचित्रमेवाऽभूत् मत्कृते त्विदम्।

अस्तु, गृहे समागत्य तद्विषयेऽहं पुनरपि विचारं कर्त्तुं प्रारब्धवान्। अकस्मादेव मया विचारितं यत् संभवतः मम वस्त्राणि न समीचीनानि वर्तन्ते। तद्विचारयतैव मयाऽनुभूतं यत् कानिचित् मम वस्त्राणि अधिक-लम्बानि कानिचिच्च लघूनि प्रतीयन्ते। कानिचिदधिक-शिथिलानि कानिचिच्चाऽधिक-परिरब्धानि वर्तन्ते। स्फूर्तिमतो नरस्य सुन्दरतायां सुष्ठुतायां च तस्य वस्त्राणामपि महद् योगदानं भवतीति विचार्यं मया सर्वाणि वस्त्राणि त्यक्तुमपि निश्चितम्।

अन्येद्युश्च प्राप्तरुत्थाय सर्वप्रथमम् आपणं गत्वा विविधान्यभिनववर्ण-समन्वितानि वस्त्राणि क्रीत्वा नगरस्य यः प्रसिद्धः आधुनिकतमश्च सौचिकः (दरजी) आसीत् तस्य पार्श्वे सोत्साहं गतवान्। स परिधानविशेषज्ञोऽपि मत्कथनाऽनुसारमेव यथाम्भवं शीघ्रमेव सुन्दराणि वस्त्राणि स्यूत्वा शीघ्रमेव प्रददौ। एतत्प्रपञ्चे मम दशसहस्राणि रूप्याणि विनष्टानि। पुनरपि विचारितवान् यत् यदि सुन्दर्यो युवतयो ममोपरि पूर्ववद् दृष्टिपातं कुर्युस्तदा सकलमेतत् फलीभूतं भवेत्।

अथ सायंकाले तानि नूतनानि वस्त्राणि परिधाय नवीनौ चोपानहौ पादयोः कृत्वा बहुशः सुगन्धप्रक्षेपणं कृत्वा पटवासकं च वस्त्रेषु निक्षिप्य तरलितमनसा यदाऽऽपणस्य चतुष्पथमुद्दिश्य प्रचलितस्तदाऽहम् अनुभूतवान् यद् यथाऽहम् आकाशे वायुना सह शनैः-शनैः प्रवहामि। मम चरणौ पृथिव्यां न भवतः प्रत्युत अन्तरिक्षे उड्डयेते। वक्षःस्थलं विस्तार्य मुहुर्मुहुरहम् आपणस्य चतुष्पथान्निष्क्रममाणस्तद् उद्यानस्थलं (पार्क) प्राप्तवान् यत्र स्त्रियः पुरुषाश्च सायंकाले भ्रमणाय विहाराय समययापनाय च पर्याप्तसंख्यायाम् प्रायः समागच्छन्ति नित्यम्।

अहो! किन्तु दुःखम्!! महादुःखतरम्!! दारुणं च वृत्तं यत् वारम्वारम् इतस्ततो दृष्टेऽप्यहं ज्ञातवान् यत् काऽपि महिला मां तथा कनीनिकाभिर्न पश्यति यथा पूर्वं पश्यति स्म। अहम् उष्ट्रवत् इतस्ततः भ्रमणं कृत्वा निराशभावमापन्नः सन् तदुद्यानस्य एकान्ते बेंचासने समुपविष्टवान्। तदानीं सन्ध्यासमयस्य गाढान्धकारः, शनैः-शनैः प्रारब्ध आसीत्। मनः सन्तोषायाऽहं विचारं कर्त्तुं प्रारब्धवान् यत् सम्प्रति गाढान्धकारवशादेव संभवतः काऽपि न मयि ध्यानं कुरुते।

अस्तु, 'त्याज्यं न धैर्यं विधुरेऽपि काले' इति विचार्य अग्रिमे च दिवसे

किञ्चिन्मन्दोत्साहेन समागत्य तत्रैव बेञ्चासने समुपाविशम्। कतिपयक्षणाऽनन्तरमेवाऽहं दृष्टवान् यत् काऽपि स्त्री कटाक्षेण मां मुर्हुर्मुहुः पश्यन्ती मदभिमुखेव शनैः शनैः समायाति। यद्यपि सा महिला मत्कल्पनाऽनुरूपा सुन्दरी युवती च नाऽभूत् किन्तु तदानीं तस्याः मामभिलक्ष्य आगमनमेव कथंचित् सन्तोषकरं जातम्। अहं स्वस्कन्धौ प्रस्फोट्य वक्षःस्थलं विस्तार्य साऽभिमानमितस्ततो द्रष्टुं प्रारेभे। यद्यपि मम चित्तं तु तस्यामेव उपनिबद्धमासीत्।

सा मम पार्श्वे समागत्य समीपस्थं बेञ्चासनम् उपविवेश। अहश्च तदानीम् मनसि किञ्चिद् दुःखमनुभूतवान् यद् अद्याऽहं स्वनवीनं कोटवस्त्रं परिधाय कथं न समागतः। तत्समये परिहितं कोटवस्त्रं च मया पुरातनवस्त्रभण्डारादेव क्रीतम् आसीत् अस्य कोटस्य रङ्गः अत्यन्तं मनोरमो बभूव तस्मादेव चाऽद्य परिधाय तद् अहं निष्क्रान्तः गृहात्।

अस्तु, सा युवती मम पृष्ठत आगत्य निपुणं च मां निरीक्ष्य परितः भ्रमणं कर्त्तुम् आरभत। तस्य परिभ्रमणं निरीक्ष्य ममाऽपि चित्तं दोलायमानमिव बभूव। मयाऽनुभूतं यदद्याऽपि मम व्यक्तित्वम् आकर्षणक्षमं सौन्दर्ययुक्तं च वर्तते। इत्येवं विचारत्येव मयि यदा स महिला मम समक्षमेवाऽऽगत्य संस्थिता तदा मम हृद्गतिरपि द्विगुणिता सञ्जाता।

सहसैव सा माम् अकस्मात् पप्रच्छ–"किम् अहं भवतः कोटवस्त्रं द्रष्टुं शक्नोमि? मम पत्युरपि कोटम् एतादृशमेवाऽऽसीत् किन्तु विगतमासे एव न जाने केन चोरितं तत्। किम् एतस्य अन्तर्वस्त्रम् (अस्तर) अहम् अवलोकितुं शक्नोमि?"

'अवश्यं महोदये! अवश्यम्' इत्युक्त्वा अहं तत्समक्षमेव वक्षःस्थलं विस्तार्य दीर्घं च निःश्वस्य (संभवतः स्वपौरुषं शरीरसौन्दर्यं वा दर्शयितुमीप्सुः) ताम् आकर्ष्टुकामः शनैः-शनैः कोटस्याऽन्तर्वस्त्रं दर्शयितुं तस्य बन्धनम् (बटन) उद्घाटयितुम् प्रारब्धवान्।

कोटस्याऽन्तर्वस्त्रे संलग्नं सौचिकस्य व्यवसायचिह्नम् (दरजी का ट्रेड मार्क) आलक्ष्य सा महिला चाऽकस्मादेव तारतरैः स्वरैरिदं वक्तुं प्रारभत– "एतत् कोटं तु मम पत्युरेव वर्तते। त्वया कुत एतदधिगतम्? त्वं तु चौरोऽसि– त्वं महान् साहसिकः–कथं प्रागल्भ्येन सर्वेषां पुरस्तादेव कोटमेतत् परिधाय परिभ्रमणं विधत्से.... अरे! इदं तु तव महद् दुःसाहसपूर्णं कृत्यम्.... इत्यादि।"

तस्य तथाविधं चीत्कारम् आक्रोशं च समाकर्ण्य केचनाऽन्येऽपि पुरुषाः

स्त्रियश्च इतस्तत आगत्य तत्र मां परितः स्थातुं प्रारभन्त। मम च विचित्रैव स्थितिः सञ्जाता। तदानीं त्वहम् भगवन्तमेतदेव प्रार्थितवान् यद् इयं धरित्री



क्षिप्रमेव विदीर्णा भवेत् येन तत्राऽहं कोटसहितः समाविष्टो भूत्वा सद्य एवाऽन्तर्हितो भवेयम्।

अस्तु, अपमानाऽधिक्यात् संक्षुब्धत्वाद् अव्यवस्थिमस्तिष्कस्तदाऽहं न ज्ञातवान् यत् कदाऽहं पुलिसस्थाने थानाध्यक्षस्य समक्षं प्रापितः। थानाध्यक्षश्च मां विविधान् प्रश्नान् कर्त्तुम् प्रारब्धवान्। तद्यथा–किं नामधेयोऽहम्? किं करोमि? क्व निवासामि? इत्येवमादि। तत्सन्दर्भे एव नामसंकेतादिप्रश्नाऽनन्तरं यदा स मम आयुषो विषये प्रश्नमकार्षीत् तदैव मम देहे विद्युत्तरङ्ग इव सञ्चचार। अहं वास्तविकतायाः साक्षात्कारं कृतवान्। मम शरीरं तप्तम् अभवत्।

अहो! अधुना मया ज्ञातं यत् साम्प्रतं कथं नैव ममोपरि युवतयो ध्यानं

विदधति। अहन्तु प्रौढः वृद्धश्च भवामि। मम परिधानस्याऽपि अनेनाऽऽयुषा सह न कोऽपि सम्बन्धः सम्प्रति। न च एतस्मिन् आयुषि मम कथमपि सामर्थ्यमस्ति सुन्दरीणाम् आकर्षणाय। यतो हि–कृष्टं कैशोर्यम्, मृता मसृणता, समाप्तं स्वाभाविक-कोमलत्वम्, मृतं मुख-माधुर्यम् विरतः कपोलानुरागः, नष्टम् ओष्ठसौष्ठवम् व्यतीतं नवयौवनम्..... अहो! ते हि नो दिवसा गताः–अहन्तु प्रविष्टः प्रौढे वयसि।

ततः! प्रभृति यदि काऽपि युवती माम् आपणे पश्यति मम पार्श्वतश्च प्रयाति तदाऽहं निजनेत्रे अन्यतः परिवर्तयामि। एतदेव चाऽस्माकम् आयुषः आकस्मिकम् परिवर्तनम्।

अयि पाठकमहानुभावाः! कृपया भवन्तोऽपि स्वहृदयेषु हस्तं निधाय सत्यं कथयन्तु यत् किं भवद्भिरपि मादृशः कश्चन अनुभवः साक्षात्कृतो, न वा? यदि भवताम् आयुषः चत्वारिंशत् वर्षाणि अतिक्रान्तानि स्युस्तदा मन्येऽहं नूनं भवद्भिस्तादृशः कश्चिदनुभवः सुनिश्चितमधिगतः स्यात्।

किन्तु यदि भवताम् आयुः अधुना पञ्चविंशति-वर्षाणि न लङ्घते तदा एवं-विधम् अनुभवम् अधिगन्तुं भवन्तो नूतनम् आगामिनं च एकविंशतिशताब्दस्य प्रारम्भं प्रतीक्षन्ताम्–इत्येव ममाऽत्र निवेदनम् इति।

•

# उत्तरपुस्तिकासु कानिचित् पत्राणि

विगतसप्तदशवर्षैरहं विभिन्न-भारतीय-विश्वविद्यालयानाम् उत्तरपुस्तिकानां परीक्षणकार्यं सम्पादयामि। नीरसमिदं परीक्षणकार्यं कदाचिद् अत्यन्तं सरसं मनोरञ्जकं चाऽपि जायते। तदर्थम् इमे परीक्षार्थिनः धन्यवादार्हा एव।

अहम् अत्र पाठकानां मनोरञ्जनाय तथाविधानि कानिचित् पत्राणि निदर्शनरूपेण प्रस्तौमि–

सम्मान्याः परीक्षक महोदयाः!

अहं विंशतिवर्षीया मातृविहीना कन्या। अस्मिन् वर्षे मम विवाहः प्रतिश्रुतः किन्तु वरपक्षः कथयति यत् स्नातकपरीक्षोत्तीर्णा (बी०ए०) एव वधूः भवितुम् अर्हति। भवत्कृपया यदि अहम् अस्मिन् पत्रे उत्तीर्णा स्यां तर्हि ध्रुवमेव बी०ए० परीक्षोत्तीर्णतां गमिष्यामि। उत्तीर्णायां च मयि मम पिता कथमपि तान् अनुरुध्य सम्पादयिष्यति विवाहम्। सम्प्रति तत्सर्वं भवदधीनमेव।

भवतामेव कृपाभिलाषिणी–

.........(परीक्षार्थिनी)।

अधुना भवन्तः पाठका एव कथयन्तु यदत्र मया किं करणीयम् आसीत्। एवमेव एकः परीक्षार्थी स्वस्याम् उत्तरपुस्तिकायाम् अलिखत्–

अयि! बृहस्पतिसदृशाः परीक्षकाः!

अहं अत्यन्तं निर्धनः छात्रः। जलौघे मम सर्वाणि पुस्तकानि प्रवहितानि। कृषिरपि विनष्टा। पुस्तकं विनैव कथमपि परीक्षा दीयते। यदि भवतां कृपादृष्टिः स्यात् तर्हि कथमपि समुत्तीर्णः स्याम् अस्मिन् वर्षे। भवताम् एव आजीवनं सेवकः कृपाकांक्षी च–

...(परीक्षार्थी)

अनुक्रमाङ्क............

अधुनाऽहम् एकं तथाविधम् पत्रम् उपस्थापयामि भवताम् पुरतो यद् विलोक्य भवन्त एव निर्णयं कुर्वन्तु यदेतत् दयायाचनपत्रम् आहोस्विद् भयादोहनपत्रं वर्त्तते–

भोः परमकारुणिकाः परीक्षकाः!

भवतां पादपद्मेषु प्रणामाञ्जलयः,

अहम् एको निर्धनो ब्राह्मणः प्राथमिकपाठशालायाम् अध्यापकः। मम तिस्रः कन्यकाः। पत्नी दिवङ्गता। कथमपि कन्यकाः पालयामि। यद्यस्मिन् वर्षे

भवदाशिषा बी०ए० तृतीयवर्षे उत्तीर्णो भवेयं तर्हि कथमपि बी०एड्० कृत्वाऽधिकं वेतनं प्राप्य पारिवारिकान् पालयितुं क्षमः स्याम्। बी०ए० परीक्षायाम् ममाऽहं तृतीयः प्रयासः। यद्यस्मिन् अपि वर्षे भवान् माम् अनुत्तीर्ण विधास्यति तदा ध्रुवम् एवाऽहम् आत्महत्यां करिष्यामि। अस्या ब्रह्महत्याया दोषी भवानेव भविता। तदनन्तरं कन्यकानामपि जीवनं कष्टग्रस्तं भवेत्, तस्याऽपि च पापस्य भागी भवानेव स्यात्। अत एव शान्तमनसा तत्सर्वं विचार्यैव भवान् मूल्याङ्कनं कृत्वा अङ्कप्रदानं करोतु। नो चेत् ........।

भवतामेव....-

............(परीक्षार्थी)।

एकस्याम् उत्तरपुस्तिकायां च केवलं 'जयतु परीक्षकः' इति वाक्यमेव दशपृष्ठेषु लिखत्वा कश्चित् छात्रः एकादशे पृष्ठे च लिखिति यत्-'हे परीक्षकमहानुभाव! केवलम् एकवारमेव भवगतो रामस्य जयकारं कृत्वा यदा रावणोऽपि संसारसागरम् उत्तीर्णवान् तदा भवतां जयघोषस्तु मया सहस्रवारं लिपिबद्धः कृतः।

"किं भवान् एनां क्षुद्रपरीक्षाकुल्यामपि मत्कृते सरलां कृत्वा न माम् उत्तीर्णतां प्रापयिष्यति" इति।

एकस्या उत्तरपुस्तिकायाश्च प्रथमपृष्ठे श्रीरामभक्तस्य श्रीमतो हनुमतः स्थूलम् एकं चित्रम् आलेख्य तत्र सम्पूर्णा हनुमान-चालीसा परीक्षार्थिना लिखिता, कस्याऽपि प्रश्नस्य चोत्तरं नैव लिखितम्।

अपरस्याम् उत्तरपुस्तिकायां तु महदाश्चर्यकरं वृत्तमभवत्। तत्र यदैवाऽहम् प्रश्नानां मूल्याङ्कनार्थम् प्रथमं पृष्ठम् उद्घाटितवान् तदैव दृष्टवान् यत् तत्र पिनद्वारा सहस्ररूप्यकाणाम् एकं नोटपत्रं पिनद्धं वर्तते। द्वितीयपृष्ठे च एकं चलचित्रगीतम् आसीत् तस्य च प्रथमा पंक्तिरियम्-

"तेरे द्वार खड़ा भगवान्, भगत भर दे ये झोली।"

तदनन्तरं च एकम्पत्रमपि लिखितमासीत् यत् मह्यं प्रथमश्रेण्या अङ्कान् प्रदाय कृपया अनुगृह्णन्तु भवन्तः। परीक्षापरिणामे च घोषिते सहस्रं रूप्याणि पुनः सम्प्रेष्य अनुगृहीतो भविष्यामि।

एकस्याम् उत्तरपुस्तिकायां प्रथमपृष्ठे "शान्ताकारं भुजगशयनम्.....' इत्यादि श्लोकं सुन्दराक्षरैः लिखित्वा छात्रः परीक्षकं सम्बोध्य लिखति यद्-

"हे परीक्षक-महानुभावाः!

मन्ये नीरसानां प्रश्नानां दर्शनेन भवान् क्लान्तः परिश्रान्तश्च स्यात्। अत

एवाऽहं भवताम् मनोविदाय कानिचित् चुटकुलावाक्यानि लिखामि।"

तदनन्तरं चाऽसौ परीक्षार्थी तस्याम् उत्तरपुस्तिकायां नाना-हास्य-चुटकुलावाक्यमेव केवलमलिखत्। न च तत्र कस्यचिदपि प्रश्नस्य उत्तरं लिलेख।

एकस्याम् उत्तरपुस्तिकायां तु अत्यन्तं विचित्रमेव बभूव। तत्र परीक्षार्थिना मां सम्बोध्य नाना-प्रकारकाणि गालीवाक्यानि लिखित्वा विविधाऽश्लीलसम्भाषणयुक्तानि गर्हितानि वाक्यानि चाऽपि लिखित्वा अनुत्तीर्णतायां सत्याम् मम शीघ्रमेव पुनर्जन्मव्यवस्थां कर्त्तुं स्वप्रभावं प्रकटितवान्।

अस्तु, बहुविधानि सन्ति एवंविधपत्राणि। किं तेषां सर्वेषाम् उपस्थापनेन? मया तु स्थालीपुलाक-न्यायेन कानिचित् पत्राणि भवत्पुरतः समुपस्थापितानि। संक्षेपेणाऽत्र इदमेव वक्तुं शक्नोमि सम्प्रति–

धन्याः सर्वे इमे छात्राः अधन्याश्चाऽहम् एकलः।
यस्तादृशान् अनुत्तीर्णान् कृत्वा पापानि प्राप्तवान्।।

धन्या परीक्षा च परीक्षकाश्च,
धन्या इमा उत्तरपुस्तिकाश्च।
धन्योऽस्म्यहं सर्वमिदं लिखित्वा,
धन्या नराः सर्वमिदं पठित्वा।।



# अस्माकं पार्वत्यप्रदेशयात्रा

मह्यं यात्राकरणं पर्यटनं वा तावद् रोचते यत् यद्यहं पञ्च षड्वा शताब्दपूर्वम् उत्पन्नोऽभविष्यं तर्हि मम गणना निश्चितमेव इत्सिङ्ग-ह्वेन्त्सांग-फाह्यान-सदृशैः यात्रिभिः समम् अभविष्यत्। किन्तु दुर्भाग्यमेवैतद् यद अस्मिन् विषये साम्प्रतं केवलं शोकप्रस्ताव एव शक्यते पारयितुम्।

राहुल सांकृत्यायनाऽनन्तरं सम्भवतः अहमेव प्रथमः संकृतज्ञो लेखको भवामि यः लद्दाखनगरं गतवान्। केवलम् इयमेवाऽत्र भिन्नता यद् राहुल-महोदयस्तत्र पदातिरेव गतः किन्तु मम् गमनं वायुयानद्वारैव संभवमभूत्। लेह-नगरे केवलम् एक इञ्चात्मकं जलं वर्षति फलतः तत्रत्यं वातावरणं प्रायः मरुभूमिसदृशं दृश्यते। पर्वता अपि शून्याः बालुकाभित्तय इव स्थिता दृश्यन्ते। आपणिकाः समागतान् विदेशियात्रिण; प्रायः लुण्ठन्त्येव। विदेशियात्रिणोऽपि आत्मनं लुण्ठयित्वा धन्यं मन्यन्ते। शीतकाले तु तत्र सर्वत्र हिम एव भवति।

लेहनगरे आकाशवाण्याः केन्द्रमपि वर्तते। अहम् इदं कथयन् किञ्चिद् गर्वमनुभवामि यत् तेन केन्द्रेणऽस्माकं साक्षात्कारोऽपि संस्कृतलेखकरूपेण प्रसारितः। मन्ये भारतेऽन्यत्र संस्कृतलेखरूपेण मम ख्यातिः स्याद् वा न वा किन्तु लद्दाख-रेडियोकेन्द्रेण अस्माकं प्रतिभाया; सहर्षं मूल्याङ्कनं कृतम्। तत्राऽऽकाशवाणीकेन्द्रे ममाऽऽवाहनस्य एकम् इदमपि कारणं बभूव यत् तस्मिन् प्रदेशे कोऽपि साहित्यकारः गच्छत्येव न। तत्र बौद्धमठानां दर्शनपुरःसरं तत्रत्यानांसुन्दरीणां दर्शनमपि सुखकरम् उत्साहवर्धकं च जातम्।

लद्दाखाऽनन्तरमहं काश्मीरस्य श्रीनगरे गतवान्। काश्मीरप्रदेशो नदीनां सरोवराणां वनानां च प्रदेशो वर्तते। 'डल' नामा सरोवरस्तु तथाविधः सुन्दरो वर्तते यत् तस्मिन् निमज्ज्य आत्महत्यां कर्तुं मनः समीहते। यद्यपि तत्र सरोवरे एतावदधिकं शैवालतृणं वर्तते यद् भवताम् आत्महत्याया इच्छा कथमपि सफला न भविष्यति। साम्प्रतं तस्य सरोवरस्य शोधनाय सर्वकाराद्वारा एका योजना निर्मीयते यदि च सा योजना क्रियान्विता भविष्यति तदा मन्येऽहं यत् सरोवरशुद्धिसमकालमेव बहूनाम् अधिकारिणां गृहस्य दारिद्र्यमपि शुद्धितां गमिष्यति।

कुल्लू-कांगड़ाया उपत्यकाः कश्मीरादप्यधिकं मनोरमाः। कालिदासेन यद् 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इत्युक्त्वा कुमारसंभवे प्रशंसा कृता तत् वास्तविकं सौन्दर्यं कुल्लू-कांगड़ायामेव निहितं वर्तते।

एकदा डलहौजी नगरमपि गतवान्। तत्र 'योल' नाम्नि स्थाने एकः आश्रमो

वर्तते यत्र श्रीरामभक्तस्य हनुमतः तावती विशाला प्रतिमा वर्तते यद् यदि साक्षात् हनुमान् एव स्वयं ताम् पश्येत् तर्हि ध्रुवमेव स मूर्च्छितो भूत्वा पृथिव्यां पतेत्।

शिमलानगरमपि एकदा विश्वविद्यालयस्य साक्षात्कारप्रसङ्गे गतवान्। पुरा अंग्रेजशासनकाले केन्द्रीयसर्वकारस्य कार्यालया ग्रीष्मे ऋतौ शिमलायामेव गच्छन्ति स्म। १९०८ तमे प्रकाशितं रेलवे घोषणापत्राऽनुसारं शिमलानगरं कलकत्तानगरात् ११३५ मील पर्यन्तं दूरं स्थितं वर्त्तते। एतद् दूरत्वं तु संभवतः साम्प्रतमपि तथैव वर्तते किन्तु किराया-भाटकं दशगुणं वृद्धिं गतम्।

मसूरी पर्वतानां राज्ञी उच्यते। अस्मिन् नगरे कदाचित् मुहम्मद अली जिन्ना महोदयाः पं० अमरनाथ झा महोदयाश्च स्वकीयं ग्रीष्मकालं यापयितुम् अत्रैव निवसन्ति स्म। अहमपि तत्र कदाचिद् गच्छामीत्येव ताभ्यां सह अस्माकं साम्यं भवद्भिः ज्ञातव्यम्। महाजनो येन गतः स पन्था अनुवर्तनीय एव।

देहरादूनात् एकं रेलयानं रात्रौ चलति यत् प्रातः षड्वादने दिल्लीनगरम् आगच्छति। अत्र दिल्लीगाजियाबाद-नगरयोर्मध्ये रेलपथस्य उभयतः सहस्रशो जनाः नित्यकर्मणि व्यापृताः तथा दृश्यन्ते यथा एतयो नगरयोर्मध्ये सर्वकारेण सुलभाः शौचालया एव स्थापिताः। सुन्दरीं मसूरीमवेक्ष्य दृश्यदर्शनमेतद् मन्ये विदेशियात्रिभ्यो भारतदर्शनाय प्रेरयिष्यति समुत्साहयिष्यति च!

कुमाऊँ-पर्वन्तप्रान्ते तानि स्थानानि वर्तन्ते यत्र प्रातः स्मरणीयः सुलतानानामधेयो महादस्युः, सुप्रसिद्धः आखेटको वन्यपशुविशेषज्ञः श्री जिमकार्बेट-महोदयश्च अपरिमितं यशोलाभं चक्रतुः। जिमकार्बेटमहोदयस्य स्मृतौ तु सर्वकारेण रामनगरस्य पार्श्वे एकं विशालम् अभयारण्यं निर्मितं यत्र मञ्चेषु समासीनाः भवन्तः निःशङ्कं स्वच्छन्दं च विचरणं कुर्वाणान् सिंहव्याघ्रादिपशुसमूहान् तथैव द्रष्टुं शक्नुवति यथा महानगरेषु साम्प्रतं स्वच्छन्दं विचरणं कुर्वतो नानाप्रकारकान् नटवरलालान्।

किन्तु दुःखमेतद् यत् सुलतानादस्योः स्मृतिं सुरक्षणाय सर्वकारेण किमपि न कृतम्। तदर्थम् अहं सर्वकारस्य ध्यानमत्र आकृष्टं कर्त्तुमिच्छामि। अस्माकं तु दृढ एव विचारो वर्तते यत् यद्यहं संस्कृतं नाऽपठिष्यं तदा सुलतानादस्योरेव पवित्रपदचिह्नाऽनुवर्तनम् अकरिष्यम्।

दार्जिलिंगनाम्नः पर्वतीयस्थाने तु गमनस्य सौभाग्यं मया कदापि न लब्धमिति सत्यम्। यद्यपि तत्रैव अस्माकमेकः घनिष्ठः सखा वर्तते यस्तत्र आगमनाय प्रतिवर्षम् पत्रं प्रेषयति। तेनैव मह्यम् एषा सूचना प्रदत्ता यद् अत्र

यात्रामार्गे "घूम' नामधेयं रेलवेस्टेशनं वर्तते यः संसारस्य सर्वाधिकम् उच्चस्थाने स्थितं स्टेशनं मन्यते।

तेन एकाऽन्याऽपि शुभसूचना मह्यं प्रदत्ता यद् अत्र द्वे वस्तुनी अत्यन्तम् अल्पमूल्ये अभिनवे (सस्ती और ताजी) च समुपलभ्येते-प्रथमं चायं द्वितीयं च युवतयः। मन्ये तस्याऽयं व्यक्तिगत एवाऽनुभवः स्यात्। सत्यं किमस्तीति तु तत्र गत्वैव भवद्भिः शक्यते परीक्षितुम्। परीक्ष्य च कृपयाऽहमपि सूचनीयः। धन्यवादाः।



# मुक्तः स्याद् रावणः कथम्

विगताऽक्टूबरमासस्य तदानीन्तन एष वृत्तान्तो यदा रामलीला स्वपूर्णयौवने बभूव। अस्माकं नगरस्य विविधभागेषु यत्र-तत्र सर्वत्र तस्या एव प्रकोप आसीत्। अहम् मोटरसाइकिलद्वारा निजगृहं प्रतिगच्छामि स्म तदैव मया दृष्टं यत् काऽपि विशालाकृतिः मानवच्छाया विद्युत् स्तम्भस्य नीचैः स्थित्वा मां यानसाहाय्यं याचते स्म। तद् विलोक्य अहं स्वमोटरसाइकिलयानस्य गतिम् अत्यन्तं शनैः कृत्वा तम् पृष्टवान्–'किम् भो! किमस्ति वक्तव्यम्?'

सा छाया धीरगम्भीरवचसा माम् प्रत्युदतरत्–हे आर्यपुत्र! किं त्वम् अस्यैव नरगस्य निवासी वर्तसे?

**अहम्**–आम् श्रीमन् परन्तु कथम् भवान् पृच्छति? एतावती रात्रिर्व्यतीता कथम् अत्र भवान्? कश्च भवान्? वेशविन्यासेन तु प्रतीयते यद् भवान् रामलीलायाः पात्रं वर्तते, किं भवान् गृहं गन्तुं समीहते?

मम तथाविधान् प्रश्नान् समाकर्ण्य सा छाया प्रत्युवाच–वत्स! अहं रावणोऽस्मि। साम्प्रतम् मन्दोदर्या रुष्टः सन् अत्रैव नगरे मनोविनोदनाय समागतोऽस्मि।

–किं तर्हि भवान् रामलीलायाः पात्रं नास्ति?

–'राम' शब्दस्योच्चारणं मा कुरु, अहं वास्तविको रावणो भवामि।

तदाकर्ण्य भयभीतोऽहम् ईषत्-कम्पमानोऽतिष्ठम्, मनसि च 'हनुमान्-चालीसाम्' पठित्वा प्रभुं प्रार्थयामास यद् हे भगवन्! किम् अस्यां नीरवनिशायामेव रावणस्य पाणिभिर्मम मृत्युस्त्वया लिखिता। यदि मरणमेवाऽऽवश्यकमासीत् तदा प्रातर्वेला तु प्रतीक्ष्या एव। किम् मम भाग्ये रावणेनाऽपि अत्रैव मेलितव्यम् आसीत् एकान्ते पथि?

अस्तु, अहं कातरः सन् तम् अपृच्छम्–तात! का सेवा शक्यते कर्त्तुम् मया भवतः?

**रावणः**–वत्स! अहं नगरे भ्रमणं कृत्वा अतीव परिश्रान्तः सञ्जातः। निशायाम् अधुना किञ्चिद् विश्रान्तुम् इच्छामि। किं त्वम् एतावतीं व्यवस्थां कर्त्तुं शक्नोषि? चल स्वनिवासस्थाने, मामपि तत्रैव नयस्व। यदि चाऽहम् प्रसन्नो भविष्यामि तर्हि तुभ्यं किमपि दास्यामि मूल्यवत्तमम्।

**अहम् अवोचम्**–महाराज! चलतु भवान् मम गृहे एव। तत्राऽहम् एकाकी निवसामि साम्प्रतम्। तत्रैव भवतामपि काचिद् व्यवस्था भविष्यति।



स उवाच–तथाऽस्तु, किन्तु वत्स! ब्रूहि मां यद् इदं किं वाहनम्?

–मोटरसाइकिलमेतत्, पेट्रोलतैलेन चलति।

–किमपि मायाजालं तु नाऽस्ति?

–न हि तात! कलियुगस्य वाहनम् इदम्।

अस्तु, यथा-कथञ्चिद् आवां गृहे आगतवन्तौ। यदा रावणस्य शय्यायाः प्रबन्धं सम्पाद्य अहमपि शयनोपक्रमं कर्त्तुं प्रारेभे तदानीमेव स उवाच–"वत्स! मम पार्श्वे आगत्य तिष्ठ, काञ्चिद् वार्त्ताम् आवां करिष्यावहे।"

तस्य वचनं श्रुत्वाऽहम् ईषद्रोषान्वितोऽभूवम्। यतो हि तदानीम् अर्धरात्रौ मां निद्रा बहु बाधते स्म। किन्तु रावणस्य व्यक्तित्वम् आकृतिं च विलोक्य मम तूष्णीम्भाव एव श्रेयस्करः आसीत्।

अथ तत्समीपं गत्वा यदाऽहं तत्र समुपाविशं तदैव स पातुं जलं याचितवान्। अहञ्च ग्लासपत्रे जलं नीत्वा यदा तत्र गतवान्, स उवाच–"न हि वत्स! पूर्णमेव घटम् अत्राऽऽनयस्व"।

यदा चाऽहं घटं नीत्वा तस्य पुरतः समुपस्थितोऽभूवम्, स गटागटं कृत्वा सर्वमेव घटं रिक्तं कृतवान्। पानीयं पीत्वा स माम् अवोचत्–

"वत्स! जले कश्चिदपि स्वादो न वर्त्तते।"

अहम् प्रत्युवाच–पानीयमिदं नरगपालिका द्वारा आपूर्यते। अत्र क्लोरीन-पदार्थस्य मिश्रणं वर्त्तते, अर्थात् पानीये मिश्रणम् (मिलावट) भवति।

'मिश्रणम्!' रावण; साश्चर्यम् उक्तवान्–'अहन्तु स्वकीय-लङ्कापुर्याम् मिश्रणकरणे कठोरं दण्डयामि। एकदा मम पाचको नरमांसे पशुमांसं मिश्रितवान् तदा चाऽहं तस्य अङ्गभङ्गं कारितवान्।'

'तात! इदं तु किमपि नाऽस्ति। अस्माकं देशे शुद्धं वस्तुजातं किमपि न प्रयुज्यते। शुद्धभोजनेन तु साम्प्रतं पाचनशंक्तिरपि विकृता भवति। शुद्धदुग्धपानेन च बालानाम् अतीसारः प्रवर्त्तते।'

'आश्चर्यम्! घोरम् आश्चर्यम्!!' रावणः प्रत्युवाच।

'आम्, श्रीमन्! साम्प्रतम् अस्माकम् आदर्शः डालडाघृतं चायं च वर्त्तेते'–अहम् उक्तवान्–

**रावणः**–डालडा चायं च? वत्स! काविमौ परमप्रतापिनौ तेजस्विनौ जीवौ?

**अहम्**–महाराज! डालडा तु शुद्धघृतस्य दत्तकः पुत्रो वर्तते। चायं च तत् प्रातः स्मरणीयम् पेयं भवति येन मनः मस्तिष्कञ्च चैतन्यं चिनुतः। डालडानिर्मितान् पदार्थाञ्च भुक्त्वा अस्माकं चिह्वा कोपभवनाद् बहिरागच्छति।

**रावणः**–अद्भुतम्! महद् अद्भुतमिदम्! वत्स! किमत्र तव गृहे किमपि डालडानिर्मितं वस्तु वर्त्तते? अहन्तु तद् अधुनैव भोक्तुम् इच्छामि।

**अहम्**–तात! साम्प्रतं तु किमपि नाऽस्ति किन्तु प्रातःकाले काञ्चिद् व्यवस्थां करिष्यामि।

वार्त्तालापप्रसङ्गे एवाऽहम् तम् उक्तवान् यत् कथं वयं डालडां भुक्त्वा चायपानं च कृत्वा कण्ट्रोलस्य आपणे चलचित्रालये च पंक्तिबद्धा भूत्वा आत्मानं गौरवान्वितं मन्यामहे।

"कण्ट्रोलं चलचित्रालयश्च किं भवतः?" सोत्सुकः स पप्रच्छ।

**अहम्**–हे तात! कण्ट्रोलं तु सर्वकारस्य अनन्नवितरण-विभागो वर्त्तते। साम्प्रतं वयं भारतीया जनाः प्रातरुत्थाय मन्दिरमार्गं त्यक्त्वा प्रत्यहं कण्ट्रोलापणस्य मार्गमेवाऽनुसरामः। अतः एतेनैव भवान् एतस्य महिमानं ज्ञातुं शक्नुते।

अथ चलचित्रालयस्तु तत् मन्दिरं भवति यत्र गत्वा साम्प्रतिकाः कलियुगीनाः नवयुवकाः स्व-स्वमनोनुरूपम् आदर्शम् उपलभन्ते। चलचित्रालये गमनम् अस्माकं जन्मसिद्धः अधिकारो भवति। अहमप्यद्य एकं धांसू-चलचित्रं विलोक्य ततः प्रतिनिवृत्त एव आसम् एतस्मिन्नेव काले भवान् पथि मां मिलितवान्।

**रावणः**–चलचित्रम्!!

**अहम्**–आम् तात! चलचित्रालयेषु (टाकीजेषु) चलचित्राणि प्रदर्श्यन्ते। तत्र च नायक-नायिकाः सुगन्धि-परिवृतास्तथैव स्वनितम्बान् नर्त्तयन्ति यथा रम्भा-शम्भाद्यप्सरसः स्वर्गे नृत्यं कुर्वन्ति स्म।

**रावणः**–(सुदीर्घं निःश्वस्य) प्रतीयते यूयं संस्कृतिविहीना भवथ।

**अहम्**–संस्कृतिस्तु केवलं प्राचीनेषु पुस्तकेष्वेव रोचते। तत्रैव च सा निवसति। तात! साम्प्रतं तु आर्यावर्त्ते डिस्को-संस्कृति वर्धतेतमाम्। तत्समक्षं च कोऽपि स्थातुं न प्रभवति। अस्माकं डिस्को-संस्कृतिः अत्यन्तं प्रबला मायाविनी च। भवतामपि माया तत्समक्षम् अतिक्षुद्रा हीनैव च स्यात्।

**रावणः**–वत्स! मन्ये यूयं मर्यादाविहीनाः सञ्जाताः।

**अहम्**–तात! यथा भवान् कुबेरं स्वभोजनालयस्य नागदन्तिकायां लम्बितवान् तथैव वयमपि प्राचीनभारतीयमार्यादाः ताम्बूलस्याऽऽपणे सुरक्षामः।

**रावणः**–शान्तं वत्स! शन्तम्, अहन्तु त्रैलोक्याधिपति भूत्वाऽपि स्वस्याम् मर्यादायामेव स्थितोऽभूवम्। किन्तु यूयम् आर्यजनाः पथभ्रष्टा भवथ। अहं पितामहं (ब्रह्माणं) गत्वा समग्रमेतत् विस्तरेण निवेदयिष्यामि। (क्षणं तूष्णीं स्थित्वा पुनः स उवाच–) वत्स! द्वित्रान् प्राणिनस्तव पवित्रभूमेरार्यावर्ताद् अहं निदर्शनरूपेण लङ्कां नेतुम् इच्छामि। मन्ये तेभ्यः पुरुषेभ्यो लङ्कायामपि मम प्रजाजनाः प्रेरणां प्राप्य लाभान्विता भविष्यन्ति।

**अहम्**–महाराज! अहन्तु भवन्तं तथाविधौ द्वौ प्राणिनौ सङ्केतयामि यौ भवता सह गत्वा तथैव लङ्कायाः कायाकल्पं विधाय व्यापकौ भविष्यतः यथा घासलेटस्य महिमाऽत्र भारते वर्षे व्यापकः।

**रावणः**–शीघ्रं कथय वत्स! कृपया शीघ्रमेव तयो र्नामधेयं ब्रूहि माम्। अहन्तु तौ बलादपि निगृह्य तत्र नेष्यामि।

**अहम्**–तात! प्रथमस्तु तत्र भूराजस्वविभागे लेखपालो वर्तते, द्वितीयश्च पुलिसविभागे थानाध्यक्षः। लेखपालस्तु प्रातर्वेलायां स्वगृहे एव मिलिष्यति। तस्य गृहे सप्तवादनात् पूर्वमेव गन्तव्यम् अन्यथा स तदनन्तरम् अन्तर्ध्यानतामेव गमिष्यति। थानाध्यक्षश्च रात्रौ द्वादशवादनाऽनन्तरं राजमार्गेषु वक्षःस्थलं प्रसार्य भ्रमणं कुर्वाणो द्रक्ष्यते। यस्य हस्ते वेत्रदण्डं भवेत् श्मश्रुबालाश्च नारदस्य शिखावत् कठोरा उत्थिताश्च भवेयुस्तदा स एव ज्ञातव्यः।

अथ च हे तात! इमौ तत्र लङ्कायां स्वच्छन्दौ करणीयौ। तदैव निजमायां दर्शयिष्यतः। एतयोरुपरि कठोरानुशासनेन भवतामेवानिष्टं सम्भविष्यति। अत एव नम्रेण वर्तितव्यम् एताभ्यां सह। अन्यथा लेखपालस्तव लङ्कापुरीं यूरोपे विक्रेष्यति, थानाध्यक्षश्च भवन्तमेव गुण्डा-एक्टे बन्धनालयं (हवालातं) प्रापयिष्यति।

रावणो मम कथनस्य तात्पर्यम् अधिगतवान् न वा इति त्वहं न ज्ञातवान् किन्तु अग्रिमे दिवसे यदा सुप्त्वा अहम् उत्थितस्तदा दृष्टवान् यत् रावणो मम गृहे न वर्तते। न जाने सः कदा प्रस्थितो बभूव। अभिनवं दैनिकं पत्रम् मम बहिः प्राङ्गणे विद्यमानम् आसीत्। तत्र मुखपृष्ठे एव स्थूलाक्षरेण लिखितमासीद् यत्– "अद्य रात्रौ लेखपालस्य श्री प्रमोदकुमारस्याऽपहरणं तस्य गृहस्थिताद् विष्टतरात् अथ च नगरकोटपालस्य श्री सर्वदमनसिंहस्याऽपहरणं नगरभ्रमणं कुर्वत एव बभूव। सर्वकारो व्यग्रतया तौ अन्वेष्टुम्........." इत्यादि।

शनैः शनैः अपहरणसमाचारः शान्तो बभूव। सर्वे च घटनामिमां विस्मृतवन्तः।

एकदा निशायाम् अकस्मादेव केनाऽपि मम गृहस्य बहिःस्थितं घटीयन्त्रम् अवादि। यदा चाऽहं कपाटम् उद्घाटितवान् तदा दृष्टवान् यत् कोऽपि कृष्णकायः बलिष्ठशरीरः मां सम्बोध्य 'आर्यपुत्र! आर्यपुत्र!!' इत्येवम् उच्चारयति। अथ स पुरुषो माम् एकान्ते यत् किमपि चोक्तवान् तत् सर्वम् अहम् अविकलं भवताम् पुरतः प्रस्तौमि। स माम् उवाच–

'भद्र! अहं रावणस्य विश्वस्तो दूतो भवामि। स भवन्तम् एवं सन्देशं प्रेषयति यत्–स महति दुःखसागरे सम्प्रति निमग्नः सञ्जातः। उभावपि मत्प्रेषितौ प्राणिनौ लङ्काया उपरि वज्रपात इव कुर्वतः। तयोः सान्निध्येन प्रजाजनाः विविधरूपेण प्रशिक्षिताः। साम्प्रतं लङ्कापतेः प्रमोदमहालये पुलिस-

थाना-स्थानं वर्त्तते। अशोकवाटिका च मालवस्तु-विभागरूपेण परिवर्त्तिता। लेखपालनामा प्राणी लङ्काभूमौ यत्र-तत्र-सर्वत्र अवैधं स्वामित्वं कुरुते। जना अपि तमेव अनुकुर्वाणा आसते।'

स दूतश्च अग्रेऽपि जगाद्–'आर्यपुत्र! स्वयं लङ्काधिपतिरपि १५१ धारायां त्रिवारं हवालातम्प्रापितः। द्यूतक्रीडायां तत्र 'जुआ-एक्टं' मदिरापाने च 'दारु-एक्टं' प्रवर्त्तते। तदेवम् अस्माकं स्वामी (रावणः) लङ्कानगरीम् एताभ्यां मुक्तां विधातुं भवन्तं स्मरति। यदि कोऽपि उपायः सम्भवेत् तर्हि शीघ्रमेव भवान् मां निर्दिशतु। अहञ्च तस्याऽतिविश्वस्तः सेवको दूतश्च इति।'

तत् सर्वं समाकर्ण्य अहन्तु स्तब्ध इव सञ्जातः। महामहिमस्य श्रीलङ्कापतेः समुद्धाराय यदि स्यात् कश्चन उपायो भवताम्पार्श्वे तर्हि भवन्त एव मां लिखन्तु। अथ कृपया भवन्तः स्वकीयं गृहसङ्केतम् माम् प्रेषयन्तु येन रावणस्य तं दूतम् अहम् भवतां गृहे एव प्रेषयेयं येन भवन्तस्तम् एव साक्षात् मुक्तिमार्गं निर्दिश्य यशोलाभं कुर्वन्तु।



# अथातोऽधर्मजिज्ञासा

**अथ भूमिका**–अस्माकं गृहे पूर्वजैः सुरक्षिता एका पाण्डुलिपिवर्त्तते। सा च पाण्डुलिपिः अतिशय-भ्रष्टा महता प्रयत्नेनैव शक्यते पठितुम्। तत्रत्यम् आदिमं सूत्रम् 'अथाऽतोऽधर्म-जिज्ञासा' इति वर्त्तते। मीमांसादर्शने मया "अथातो धर्मजिज्ञासा" इति सूत्रं तु पठितम् परन्तु नवीनम् इदं सूत्रं केन महर्षिणा प्रणीतम् इति तु तत्पाण्डुलिपि-निरीक्षणेन न शक्यते ज्ञातुम्।

अस्तु, पुस्तकस्याऽस्य त्रयोदशसूत्रात्मकस्य भाष्यमपि तस्मिन्नेव पाण्डुलिपिपत्रे वर्त्तते। परन्तु तत्रत्यानि अक्षराणि महाभ्रष्टानि साधारणैश्च विज्ञैः पठितुमपि अशक्यानि। अहञ्च कथं कथमपि पूर्वजप्रदत्ताऽऽशीर्वादसहाय्येन गुरूणां च महाकृपाबलेन पठितवान्।

सम्प्रति मया तान्येव सूत्राणि स्वोपज्ञवृत्ति-पदकृत्यादिपुरःसरं जनतासमक्षं बहुजनहिताय बहुजनसुखाय चेति भावनामवधार्य सर्वप्रथमं प्रस्तूयन्ते–

## सर्वसुखप्रापणालक्षणोऽर्थोऽधर्मः।।१।।

**सपदकृत्यवृत्तिः**–यत्कारणेन संसारे सर्वविधं सुखं प्राप्यते तदेव मुनिभिः 'अधर्म' इत्युच्यते। सूत्रे 'सर्व' ग्रहणम् आधिदैविकाऽऽध्यात्मिकाऽऽधिभौतिकादि-त्रिविध-सुखद्योतनार्थम्। अन्यथा केवलम् आधिभौतिक-सुखस्यैव प्रतीतिः स्यात्।

## तद्विपरीतो धर्मः।।२।।

**सपदकृत्यवृत्तिः**–यस्य सम्पादनेनाऽऽचरणेन वाऽत्र त्रिविधमपि दुखःम्प्राप्यते तदेव साम्प्रतं 'धर्म' इत्युच्यते।

## अधार्मिकानामेव प्रतिष्ठा।।३।।

**सपदकृत्यवृत्तिः**–लोके सदैव अधार्मिकजनानामेव प्रतिष्ठा सम्मानं च दृश्यते यतोहि अधार्मिकाः सदैव सम्पन्नाः पदारूढाश्च भवन्ति।

सूत्रे 'एव' ग्रहणं धार्मिकाणां तटस्थानां वा पूर्णरूपेण निवृत्त्यर्थम्। अन्यथा भ्रान्तिः स्यात् यत् कदाचित् धार्मिका अपि प्रतिष्ठां लभन्ते।

## अधर्मेऽर्थलाभः।।४।।

**सपदकृत्यवृत्तिः**–अधर्माऽऽचरणेन सदैव धनलाभो भवति। यथा डालडाघृते मज्जा-मिश्रणेन शुद्धे घृते च डालडा-मिश्रणेन प्रभूतं वित्तं प्राप्यते दारिद्र्यं च विनश्यति। अर्थालाभेनैव च सर्वविधं सुखं शक्यते प्राप्तुम्।

## धर्मे द्रारिद्र्यम्।।५।।

**सपदकृत्यवृत्तिः**–धर्मपालने सदैव दारिद्र्यं प्राप्यते। धार्मिकास्तु जना दरिद्रा एव भवन्ति। यत्र धूमस्तत्राऽग्निरिति व्याप्तिवत् यत्र यत्र दरिद्रत्वं तत्र तत्र धर्मपालनत्वमेव बोध्यम्।

## चाटुकारितायां पदार्थसिद्धिः।।६।।

**सपदकृत्यवृत्तिः**–चाटुकारिताबलाद् एव पदम्प्राप्तुं शक्यते। साम्प्रतिका राजनीतिज्ञा इदमेव कुर्वन्ति। पदप्रान्तौ च अर्थप्राप्तिः स्वयमेव भवति।

## पदार्थम् पदयात्रा।।७।।

**सपदकृत्यवृत्तिः**–प्रायः संसारे निर्धना एव पदातिं गच्छन्ति। यतो हि अर्थाऽभावात् ते द्विचक्रिकामपि क्रेतुम् असमर्थाः सन्ति रिक्शायानस्य वा भाटकं दातुं न प्रभवन्ति। किन्तु यदा कोऽपि साधनसम्पन्नः कारयानस्य प्रयोक्ता प्रसिद्धः राजनेता पदयात्रां करोति तदा तस्य लक्ष्यं किमपि पदं प्राप्तुं भवतीति ज्ञातव्यम्।

## असत्यं विजयप्रदम्।।८।।

**सपदकृत्यवृत्तिः**–असत्याचरणमेव प्रायः विजयप्रदं भवति। ये केचिद् अल्पज्ञाः 'सत्यमेव जयते' इति कथयन्ति तत् चिन्त्यम्। तद्यथा कोऽपि संसत्सदस्यः स्वनिर्वाचनकाले पञ्चाशत्लक्षाणि पञ्चपञ्चाशत्लक्षाणि वा रूप्यकाणि व्ययं करोति किन्तु निर्वाचन-आयोगस्य समक्षं घोषणाविवरणपत्रे केवलम् दशलक्षरूप्याणां विवरणं प्रस्तुतं करोति। तेनाऽत्र ज्ञायते यत् असत्याऽऽचरणमेव तस्य जयकारणम्। सत्यविवरणघोषणायां तु तस्य निर्वाचनमेव निरस्तं भवेत्।

एवमेव क्वचिद् दुर्घटनायां शतं मानवा म्रियन्ते किन्तु शासकाः केवलं दशमानवानां मृत्योः घोषणां कुर्वन्ति। तेन एतदेव सिध्यति यत् असत्यमेवाऽऽचरणीयम्। उक्तमपि शास्त्रेषु–'यथा राजा तथा प्रजा' इति।

## उत्कोचे अधममध्यमोत्तमाः।।९।।

**सपदकृत्यवृत्तिः**–उत्कोचे ये शतं रूप्याणि ततोऽल्पं वा गृह्णन्ति ते अधमाः, ये सहस्रं रूप्याणि प्राप्नुवन्ति ते मध्यमाः, ये च लक्षं रूप्याणि ततोऽधिकं वा लभन्ते ते उत्तमाः पुरुषा भवन्तीति ज्ञातव्यम्।

'उत्कोच' ग्रहणं दानादि-निवृत्त्यर्थम्। दानकार्येषु च ये लक्षं ददति ते अधमाः ये च शतं रूप्याणि ततोऽल्पं वा ददति ते उत्तमाः भवन्तीति ज्ञातव्यम्।

## जीनवस्त्रधारिणो ब्रह्मचारिणः।।१०।।

**सपदकृत्यवृत्तिः**–साम्प्रतं ये विद्यार्थिनो जीनवस्त्रेण निर्मितं पैन्टादिकं परिधाय विश्वविद्यालये परिभ्रमन्ति त एव ब्रह्मचारिण इत्युच्यन्ते। 'जीन' ग्रहणं धौतादिवस्त्रनिवृत्त्यर्थम् अत्र कृतम्।

## धूमपातार एवाऽग्निहोतारः।।११।।

**सपदकृत्यवृत्तिः**–ये अहर्निशं धूमपानं कुर्वन्ति ते एव अग्निहोत्रिण इत्युच्यन्ते। यतो हि तेषाम् उपमुखं सदैव अग्निदेवो दीप्यते।

अत्र सूत्रे 'धूम' ग्रहणं मद्यपानादिनिवृत्त्यर्थम्। अन्यथा तत्राऽपि अतिव्याप्तिः प्रसज्येत। तथैव 'एव' पदग्रहणं नित्यं यज्ञं कुर्वाणानां गुरुकुलीयानां ब्रह्मचारिणां निवृत्त्यर्थम्। अन्यथा तत्राऽप्यतिव्याप्तिः स्यात्।

## साऽस्त्राऽनुकरणा सफला परीक्षा।।१२।।

**सपदकृत्यवृत्तिः**–यस्यां परीक्षायाम् अस्त्रग्रहणपूर्वकम् पुस्तकेभ्यः अनुकरणं क्रियते सैव परीक्षा सफला ज्ञातव्या। अतएव विद्यार्थिभिः सुनिश्चितसाफल्याय परीक्षायाम् अनुकरणं करणीयम् एव।

सूत्रे 'अस्त्र' ग्रहणं किमर्थम्? 'साऽनुकरणा परीक्षा' इत्येव सूत्रं स्यादिति चेन्न। अस्त्रं विना अनुकरण-कार्ये परीक्षकाः परीक्षायां व्यवधानं कर्तुं प्रभवन्ति। अस्त्रं च निरीक्ष्य कक्षनिरीक्षकाः परीक्षाकक्षतः प्राय; बहिरेव तिष्ठन्ति। तस्मात् सूत्रे 'अस्त्र' ग्रहणम् आवश्यकम्।

## भार्याः भयकारणानि।।१३।।

**सपदकृत्यवृत्तिः**–लोके भार्याः सर्पादिवत् भयस्य हेतवो भवन्ति। महान्तः अधिकारिणः नेतारः मल्लाः योद्धारश्चाऽपि निज-पत्नीभ्यो बिभ्यत्येव। भार्यायाः समक्षं शक्तिसम्पन्ना अपि पुरुषाः मार्जारसमक्षं मूषका इव भीरवो भवन्ति हीनाश्च दृश्यन्ते।

## शाटिकादिसन्तुष्टाः।।१४।।

**सपदकृत्यवृत्तिः**–उपरिष्टात् सूत्रात् 'भार्या' इत्यनुवर्तते। भार्या इमाः नवीन-शाटिकादिवस्त्रैरेव सन्तोषणीयाः प्रीणनीयाश्च भवन्ति। गृहकलहनिवृत्त्यर्थम् प्राय; प्रत्येकमासमेव बुधजनैः एका शाटिका तु अवश्यं क्रेतव्या।

सूत्रेऽस्मिन् 'आदि' पदस्योपन्यासः 'आभूषण-पाटवासक-सुगन्धादिपदार्थानां' ग्रहणार्थं ज्ञातव्यम्।

•

# भृत्य-पुराणम्

प्रायः सर्वविधविषयेषु पत्न्या समं मम मतैक्यम् एव भवति। सा जानाति यत् मम केन मित्रेण सह कथं वर्त्तितव्यं तथा चाऽहमपि जानामि यत् तस्याः कया सख्या सह कथं व्यवहरणीयम्। यदि सा मत्कृते बुश्शर्टवस्त्रं पैन्टवस्त्रं वाऽऽनयति तदा निश्चितमेव तस्य रङ्गादिकं मम मनोनुकूलमेव भवति। तथैवाऽहमपि यदा तत्कृते तस्याः जन्मदिवसे विवाह-दिवसे वा किमपि शाटिकादिवस्त्रम् उपहरामि तदा सा ध्रुवमेव तासां शाटिकादीनां वर्ण-मुद्रण-विन्यासादिकस्य (कलर और प्रिण्ट आदि) च प्रशंसामेव विधास्यति।

तात्पर्यम् इदमेवाऽत्र यत् गृहस्थकार्येषु आवयोः ऐकमत्यमेव भवति। परन्तु यदि क्वचित् मतभेदो वर्तते तदा स तु केवलं भृत्यनियुक्तिविषये एव। तद्विषये तस्याः काचिद् विचित्रैव मान्यता वर्तते। तद्यथा–

गृहे सेवकेन अवश्यं भाव्यम्। स च पुरुषो न स्याद् अपितु महिला एव भवतु। सा महिला चाऽपि पञ्चत्रिंशद्वर्षाद् अल्पवयसी न स्यात् स्वभावेन च कथमपि चञ्चला न भवेत्। सा च शरीरेण कृष्णवर्णा एव भवतु। ईषत् श्यामाऽपि शक्यते विचारयितुम्। किन्तु यदि सा गौराङ्गी सुरूपा च भवति तदा तु तत्र विचारस्य प्रश्न एव नाऽस्ति।

यदि च सौभाग्यात् काऽपि सेविका एवंविधा मिलेदपि तर्हि कार्ये नियोजनात् पूर्वं तस्याः साक्षात्कारोऽपि विधिवत् प्रवर्त्तते। तदनन्तरमेव च नानाविधविशिष्टनिर्देशनपुरःसरं तस्या नियुक्तिर्भवति। तेषां निर्देशानां विषये किमपि टिप्पणीकरणम् अत्र व्यर्थमेव। यतो हि ते निर्देशास्तथाविधा गोपनीया भवन्ति येन तद्विषयेऽत्र लेखनं संकेतदानं वाऽसमीचीनं तु वर्त्तते एव किन्तु स्वचारित्र्यहननमपि भविष्यति।

भवान् एव भणतु यत् तथाविधया सेविकया मम को लाभो यद् अहं तु स्वमहाविद्यालयात् श्रान्तः क्लान्तश्च भूत्वा आगत्य बहिः कक्षे स्थितः सन् पानीयार्थम् वारं वारम् आकारयामि किन्तु श्रीमती महोदया महानसे उपाहारं पाचयन्ती "अधुनैव आगच्छामि" इत्युच्चारयन्ती तत्रैव तिष्ठति किन्तु पानीयार्थं सेविकां न प्रेषयति। अथ यदा पञ्चदशमिनटाऽनन्तरं स्वयमेव पानीयस्य ग्लासपात्रं हस्ते विधाय आयाति तदा मयि एतत्पृष्ठे च यत् "त्वया बहु विलम्बः कृतः, सेविकया एव पानीयं प्रेषणीयम् आसीत्" सा उत्तरयति–"सेविकायाः करौ स्वच्छौ न भवतः, तयाऽऽनीतं पानीयं किं पेयं भविष्यति? एतत्तु मदीयमेव कार्यं वर्तते। भवदावश्यकतायाः पूर्तिं यदि अहं न विधास्यामि किं तर्हि

प्रतिवेशिनो विधास्यन्ति? अहं किमर्थमत्र गृहे समायाता? मम तु कार्यमेव पतिसेवा वर्त्तते......." इत्यादि।

अत्र चाऽऽश्चर्यम् इदमेव यत् काऽपि सेविका केवलं पञ्चदशदिनानि तिष्ठति, काचिद् एकमासपर्यन्तं द्विमासपर्यन्तं वा भवति। तदनन्तरं च तस्यां गतायां तस्याः कार्यप्रणाली एवं वर्णिता भवति–"सा तु चञ्चलस्वभावा बभूव। ह्य एव मया दृष्टा यत् सा स्नानागारे मम ब्राह्मी-आमलककेशतैलं स्वशिरसि निक्षिपति स्म। अस्माकं रिबन-पट्टिकाऽपि न जाने प्रत्यहं कथम् अदृश्या जायते स्म। मन्ये इयमेव इतस्ततः करोति स्म...." इत्यादि।

विगते वर्षत्रये १५-२० सेविकाः नियुक्ताः निष्कासिताश्च। अन्ततः सेविकास्तु न प्रत्यहम् उत्पद्यन्ते मिलन्ति च। अत एव अन्तिमसेविकाया निष्कासनाऽनन्तरं बहुप्रयत्ने कृतेऽपि यदा काऽपि सेविका न मिलितवती तदा गृहकार्येष्वतीव श्रान्ता त्रस्ता च मम पत्नी स्वयमेव माम् उक्तवती यत् "काऽपि सेविका तु साम्प्रतं नोपलभ्यते, त्वमेव किमपि कुरुष्व" इति। अहम् उक्तवान् "सेविका तु काऽपि नाऽस्ति किन्तु एकः नेपाली गोरखापुरुषः शक्यते सेवकरूपेण आनेतुम्।" मम प्रस्तावमाकर्ण्य विवशा कार्यभारेण च त्रस्ता सा तं प्रस्तावं स्वीचकार।



अग्रिमे दिवसे चाऽहम् एकं गोरखसेवकम् आनीय पत्न्याः समक्षमेव तम् उवाच–"गच्छ यद् यत् कार्यं श्रीमती महोदया कथयति तत् तत् सम्पादयस्व।" मम श्रीमती सद्य एव तम् आदिदेश–"गच्छ, महानसे चायं पच्यते, तद् इहैव आनय।"

स सेवको महानसे गत्वा तत्क्षणमेव च निवृत्य मम पत्नीं सम्बोध्य पृच्छति–श्रीमती जी! चायं कस्मिन् पात्रे आनेयम्?" तस्य मुखात् "श्रीमती जी" इति सम्बोधनमाकर्ण्य क्रुद्धा मम भार्या प्रोवाच–"किमहं तव श्रीमती वर्ते? त्वं मां 'श्रीमती' इति भणसि? कस्माद् जंगलाद् आगतोऽसि?"

स च सेवको विस्मितः किंकर्त्तव्यविमूढश्च भूत्वा शनैरुवाच यत्–"ओह! मन्येऽत्र मया किमपि अन्यथा उक्तम्। अयं साहबमहोदयो भवतीं 'श्रीमती' इत्युवाच तदा मया ज्ञातं यद् अस्मिन् नगरे भद्रमहिलां 'श्रीमती' इति शब्देनैव सम्बोधयन्ति जनाः। अस्तु, इतः परम् अहं तु भवतीं 'स्वामिनी' (मालकिन) इत्येव कथयिष्यामि। कृपया क्षम्यताम् अयम् अपराधो मम–इति।"

ततः प्रभृति सप्ताहपर्यन्तं किमपि विशिष्टं नाऽभवत्।

अथ एकदा चलचित्रम् अवलोकितुं वयम् आपणे गताः। गृहात् प्रस्थानसमये च तं सेवकम् उक्तवन्तः यद् अत्र सावधानेन भवितव्यम्। कोऽपि गृहे न प्रविष्टो भवेत् यतोहि साम्प्रतं धूर्त्ता अपि साधुवेषेण प्रचरन्ति। सोऽपि 'आम्' इत्युक्त्वा मम वचनम् अभिनन्दयामास।

इतस्तु वयं चलचित्रं द्रष्टुं प्रेक्षागृहे प्रविष्टाः, तत्र चाऽस्माकं गृहे अस्माकं विभागाध्यक्षमहोदयाः समागताः। एकदा तेऽस्माकमेव गृहे स्वकीयं छत्रं विस्मृतवन्तः। तदेव छत्रं नेतुं तदानीं ते दौर्भाग्यादेव समायाता आसन्।

अस्तु तेऽधुना गृहद्वारे स्वकीयं चरणविन्यासं कुर्वाणा एव आसन् तत्समकालमेव स गोरखासेवकः साच्चैः प्रोवाच–"अयि! सावधानो भव (खबरदार!)। यदि किञ्चिदपि अग्रे चलिष्यसि तदा....... न हि पश्यसि? ....... अहमत्र दौवारिकतां निर्वहामि....... गृहे साम्प्रतं कोऽपि न वर्त्तते......' इत्यादि।

अस्माकं विभागाध्यक्षाणां श्री त्रिवेदिमहोदयानां चरणकमलं तदानीं तु तत्रैव जडवद् बभूव। ते कोमलेन स्वरेण प्रोचुः–"अरे! अहं तु तव स्वामिनो मित्रम् अस्मि। मम छत्रम् अत्रैव गृहे वर्तते, तदेव नेतुम् अहम् अद्य समागतः अत्र। अस्तु, तर्हि त्वमेव तच्छत्रं स्वयम् आनीय मह्यं देहि।"

किन्तु सेवकस्तथैव तारस्वरेण उक्तवान्–"अहं सर्वं जानामि। अत्र नगरे धूर्त्ता अपि स्वच्छवस्त्राणि परिधाय वञ्चनकार्यमेव कुर्वन्ति। त्वमपि तथैव

प्रतिभासि। मम स्वामिनश्छत्रं नीत्वा पलायितुम् इच्छसि?" एवम् उक्त्वा स मुहुर्मुहुः स्वकीये कृपाणे हस्तस्पर्शं कर्त्तुम् आरब्धवान्। तद् दृष्ट्वा श्रीमान् त्रिवेदिमहोदयस्तु तत्क्षणमेव ततः अदृश्य इव सञ्जातः।

अग्रिमे दिवसे विभागाध्यक्षस्य श्रीमतः त्रिवेदिमहोदयस्य समक्षं मम का स्थितिरभूत् इति तत् सर्वं तु भवन्तोऽपि कल्पितुं शक्नुवन्ति।

एवमेव एकदाऽहं स्वमहाविद्यालयं गतवान् श्रीमती महोदया च क्वाऽपि नामकरणसंस्कारे प्रयाता। प्रस्थानसमये चाऽस्माभिः स सेवको बहुवारं निर्दिष्टो यत् त्रिवेदिमहोदयस्य इव पुनः केनचिद् अन्येन परिचितेन सह पुनः तथाविधवृत्तान्तस्य पुनरावृत्तिं न कुर्यात्।

अस्तु, संयोगात् तस्मिन्नेव दिने सायं समये अस्माकं रजकः पारिश्रमिकं ग्रहीतुं समागतः। सः सेवकं पप्रच्छ–"किं भो! स्वामिनी (मालकिन) वर्तते?"

स च गोरखसेवकस्तदा तं विशेषादरेण समं 'अहो! भवान् परिचितो वर्तते। आगम्यताम्" इत्युक्त्वा तं रजकं स्वागतकक्षे समुपवेश्य तस्य चाय-बिस्कुटपुरःसरं स्वागतं कर्त्तुं प्रारेभे।

यदा तस्य जलपानं प्रचलति स्म तदैव तत्क्षणमेव मम पत्नी प्रतिनिवृत्ता। संयोगाद् अहमपि पत्न्याः आगमनसमकालमेव गृहे प्रविष्टवान्। तत्सर्वं नाटकं विलोक्य मम पत्न्याः मुखे कोऽपि विस्फोटः स्यात् ततः पूर्वमेवाऽहं हाहाकारं कृत्वा हसितुम् आरब्धवान्। तद् विलोक्य मम श्रीमतीमहोदयाऽपि विस्मित्य शान्तं प्रावर्त्तत।

एवं कालो गच्छन् वर्षमेकं व्यतीतम्। अयं प्रथमः अवसरः यत् कोऽपि सेवकः एकवर्षपर्यन्तम् अस्माकं गृहे अतिष्ठत्। किन्तु एकवर्षाऽनन्तरम् एव एकं तथाविधं विचित्रं वृत्तं सञ्जातं यद् अहमेव विचारयामि यत् स नेपाली मूर्खः किन्तु कर्मठः सेवकः अस्माकं गृहे वसतु वा न वा।

तद् इदम् अद्भुतं वृत्तम् भवन्तोऽपि श्रृण्वन्तु। अस्माकमेव महाविद्यालये एका महिला प्राध्यापिका वर्तते। तस्याः भ्रातुः क्वचित् सेवासाक्षात्कारः शीघ्रमेव भवितव्य आसीत्। साक्षात्कर्त्ता च सौभाग्याद् अस्माकं मित्रमेव बभूव। चर्चाप्रसंगे महाविद्यालये एवाऽहं ताम् प्राध्यापिकाम् अवोचं यद् शीघ्रमेवाऽद्य साक्षात्कर्तृ-महोदयं सम्बोध्य पत्रमेकं भवत्यै दास्यामि येन तत् पत्रं नीत्वा भवत्याः भ्राता साक्षात्कारात् पूर्वमेव तं श्रीमन्तं साक्षात्कर्तृ-महोदयम् अवश्यं संगच्छेत्। किन्तु दुर्भाग्यात् तत् पत्रं प्रदातुम् अहं महाविद्यालये विस्मृतवान्।

अथ सायंकाले सा सुन्दरी प्राध्यापिका तत्पत्रार्थमेव अस्माकं गृहे समायाता। तदानीम् अहं क्वचित् समारोहे गतोऽभवम्। माम् अनुपलभ्य सा

प्राध्यापिका तं सेवकम् अवादीत्–"तव स्वामी कुत्र गतः?" स गोरखासेवकश्च–"शास्त्री महोदयस्तु रात्रौ ८-९ वादनपर्यन्तम् आगमिष्यति" इति प्रत्युत्तरं ददौ।

अथ सा प्राध्यापिका तं सेवकं "स्वामिनि आगते अद्यैव स अवश्यमेव अस्माकं गृहे प्रेषणीयः, अहं रात्रौ एकादश-वादन-पर्यन्तं प्रतीक्षां करिष्यामि। नैतत् कथमपि विस्मर्त्तव्यं यतोहि एकम् अत्यावश्यकं विशिष्टं च कार्यं वर्त्तते......" इत्यादि कथयित्वा निर्जगाम।

तस्याः सन्देशम् इमं स सेवको न जाने कीदृक्रूपेण मम पत्नीं कथितवान् यत् तदैव सा अत्यन्तं रुष्टा कोपाविष्टा च भूत्वा निजमातुर्गेहमेव गन्तुं समुद्यता बभूव।

अस्तु, तद्वृत्तान्ताऽनन्तरमेव स गोरखासेवको मां समीचीनो उपयुक्तश्च न प्रतिभाति। यदि कश्चित् मनोऽनुकूलः सेवको भवतां दृष्टिपथे स्यात् तर्हि कृपया मम गृहे सम्प्रेष्य महान्तम् उपकारं कुर्वन्तु भवन्त इत्येव निवेदनम् अत्र।



# एकविंशतितमस्य शताब्दस्य प्रश्नोत्तराणां स्वरूपम्

साम्प्रतिकीम् परीक्षाप्रणालीं छात्राणाम् अध्ययनरुचिं ज्ञानं चाऽवलोक्य आगामिनि एकविंशतितमे शताब्दे प्रश्नपत्राणां तेषाम् उत्तराणां च स्वरूपं कीदृशं भविता इति त्वहं समाधिस्थो भूत्वा दूरदृष्टिसम्पन्नः सन् हस्तामलकवत् विलोक्य सर्वं पूर्वापरम् पाठकानां पुरतः अविकलं प्रस्तौमि। मन्ये भवादृशा विद्वांसो मम दूरदृष्टेर्मूल्याङ्कनं कृत्वा तदर्थम् मां साधुवादेन पुरस्कृतं विधास्यन्ति।

निदर्शनरूपेणाऽत्र केवलं व्याकरणस्य प्रश्नपत्रं तस्य च उत्तर-पद्धतिरेवाऽत्र प्रस्तुतं वर्त्तते।

**सन्**–२०५०।

**परीक्षा**–एम०ए० (संस्कृतम्)।

**खण्डनाम**–प्रथमः।

**प्रश्नपत्रविषयः**–व्याकरणम्।

**समयः**–यथेच्छम्[1]।

**परीक्षकः**–डॉ० प्रशस्यमित्रः शास्त्री[2],
बी-२९, आनन्दनगर (जेलरोड), रायबरेली।

(**सूचना**–सर्वे प्रश्नाः समानाङ्कभाजः केऽपि पञ्चैव समाधेयाः। अन्तिमः प्रश्नस्तु अनिवार्यः)।

(१) 'आमन्त्रित' संज्ञया भवान् किं जानाति? स्पष्टं करोतु।

(२) 'चाय; की' इति सूत्रस्य व्याख्यां कुरुत।

(३) 'येषां च विरोधः शाश्वतिकः' इति सूत्रस्य उदाहरणं देयम्।

(४) 'संयोगे गुरु' इत्यस्य अर्थो लेखनीयः।

(५) 'द्वन्द्वे घि' इति सूत्रं स्पष्टं व्याख्येयम्।

(६) 'रुच्यर्थानाम् प्रीयमाणः' इति सूत्रस्योदाहरणम् उपन्यस्यताम्।

---

१. तदानीं समयस्य प्रतिबन्धो न भविष्यति।

२. तस्मिन् शताब्दे परीक्षकस्य नामधेयम् आवाससङ्केतश्च मुद्रितो भविष्यति। येन् सत्याम् आवश्यकतायां परीक्षार्थिनः परीक्षकसमीपं गत्वा सामदामाद्युपायैः स्वकीयाम् उत्तीर्णतां निश्चितां कर्त्तुं यथासम्भवं प्रयासमपि कर्तुम् प्रभवेयुः।

(७) 'उपाध्यायात् निलीयते'-अत्र कथं पञ्चमी विभक्तिः?

**विशेष-सूचना**-यदि कोऽपि परीक्षाकक्षे प्रश्नोत्तरं कर्त्तुं न पारयते तदा निजाम् उत्तरपुस्तिकां गृहेऽपि नीत्वा प्रश्नोत्तराणि लिखितुं शक्नोति। तदर्थं केवलं सहस्रं रुप्यकाणि कक्षनिरीक्षकाय दातव्यानि। किन्तु तस्मिन् दिवसे एव उत्तरपुस्तिका प्रत्यावर्त्तनीया।

द्वितीयादि-दिवसेभ्यस्तु शुल्कनिर्धारणे कक्षनिरीक्षकेण सह समुचितवार्त्तालापद्वारा "परस्परं भावयन्तः श्रेयः परम् अवाप्स्यथ" इति भगवत्प्रोक्तविधिना सर्वं सौहार्देन सामञ्जस्येन च सम्पादनीयम् इति।

## अथ प्रश्नानाम् उत्तराणि

**सूचना**-सर्वेषाम् प्रश्नानाम् उत्तराणि लिख्यन्ते। तत्र कान्यपि पञ्च यथेच्छं द्रष्टव्यानि। किन्तु अन्तिमस्य मूल्याङ्कनम् अवश्यं करणीयम्।

(१) 'आमन्त्रित संज्ञा'-यदा कश्चन राज्यपालः सद्यः निर्वाचितं मुख्यमन्त्रिणम् मनोनीतांश्च मन्त्रिणः शपथग्रहणार्थम् आमन्त्रयति तदैव इयं संज्ञा प्रवर्त्तते।

अथवा भवादृशाः प्राध्यापकाः कदाचिद् यदि छात्रसंघस्य समारोहे जलपानादिकरणार्थम् आमन्त्रिता भवेयुस्तदा तत्र भवन्तोऽपि 'आमन्त्रित' संज्ञया अभिहिताः भवितुं शक्यन्ते।

अथवा महाविद्यालये हड़तालोपद्रवाऽनन्तरम् प्राचार्यमहोदयः छात्रसंघस्य नेतृमण्डलं शान्तिस्थापनाय वार्त्तालापाय च स्वकक्षे आमन्त्रयति तदा ते छात्रनेतारोऽपि 'आमन्त्रित' संज्ञया अभिधीयन्ते।

(२) 'चायः की'-भारतवर्षे असमप्रदेशे चायस्य उत्पादनम् अधिकं दृश्यते। चायपानम् अत्रत्यं राष्ट्रियम्पेयम् भवति। चतुष्पथेषु चायपानं कुर्वाणा बहवः प्राध्यापकाः अध्यापनवेलायामपि दृश्यन्ते। मन्ये भवानपि चायपानस्य विशेषज्ञः स्यात्, यतो हि प्राध्यापकाः प्रायशः प्राचार्यस्य कक्षे चायपानं गप्पं च कुर्वाणाः समासते। चायविषये सूक्तिरियम् प्रसिद्धा-

चायपानम् पुण्यपानम् कार्यसिद्धौ रसायनम्।
ये पिबन्ति त्विदं नित्यं ते यान्ति परमां गतिम्।।

(३) भारत-पाकिस्तानम्, अमरीका-सोवियतसंघम्, भाजपा-कांग्रेसदलम्, छात्र-प्राचार्यम्, पुलिस-सत्पुरुषम् इत्यादि।

(४) विभिन्नराजनीतिकदलानां संयोगे प्रवर्त्तमाने मतानां गुरुत्वं विधीयते।

इयं सञ्ज्ञा प्रायशः महानिर्वाचनात् पूर्वमेव प्रवर्तते। निर्वाचनाऽनन्तरं च इयं संज्ञा स्वतः समाप्ता भवति।

सम्प्रति संयोगस्य स्थाने संयुक्तमोर्चा विधीयते। यथा केरलप्रदेशे लोकतान्त्रिकमोर्चा पश्चिमबंगालप्रदेशे च वामपन्थिमोर्चा। संयुक्तमोर्चासन्दर्भे पुरा श्री रामाराव-देवीलाल प्रभृतयः साम्प्रतं च लालू-नितीशकुमारादयः राष्ट्रियस्तरे बहु चर्चिताः।

संयुक्तदलैः जनतापार्टीरूपेण१९७७ वर्षीये महानिर्वाचने मतानां गुरुत्वम् अधिगतम् आसीत्।

(५) अपभ्रंशभाषायां 'घृतम्' एवं 'घि' संज्ञया 'घी' संज्ञया वा लोके प्रसिद्धं वर्तते।

सूत्रस्याऽत्राऽयम् अर्थो यत् द्वन्द्वे युद्धे सर्वदैव भोजनसमये पर्याप्तमात्रं घृतं सेवनीयम्। शास्त्रेष्वपि–"आयुर्वै घृतम्" इत्युच्यते। ये घृतं सेवन्ते ते युद्धे कथमपि पराजिता न भवन्ति।

(६) मन्त्रिभ्यः स्वागतसमारोहो रोचते। श्रमिकेभ्यो हड़तालं रोचते। छात्रेभ्य उपद्रवो रोचते। चरणसिंहाय रोचते स्म पदम्। पुलिसेभ्य उत्कोचो रोचते–प्रभृतीन्युदाहरणानि सूत्रस्य ज्ञातव्यानि।

(७) वस्तुतः 'उपाध्यायात् निलीयते' इति प्रयोग एव असमीचीन असामयिकश्च वर्तते। साम्प्रतम् उपाध्यायात् कोऽपि नैव निलीयते, अपि तु उपाध्याया एव छात्रनेतारं दृष्ट्वा निलीयन्ते।

एवंविधानाम् असामयिकानाम् उदाहरणानाम् उपन्यासेन भवता छात्रसमुदायस्य महान् अपमानः सम्पादितः। अहं छात्रसंघस्य अध्यक्षमहोदयम् अन्यांश्चापि छात्रनेतृन् एतस्य कृते विशेषरूपेण अनुरोधं करिष्यामि यत् ते पाठ्यपुस्तकेभ्यः शीघ्रमेव एवंविधानि छात्राणाम् अपमानसूचकानि सूत्रोदाहरणानि निःसारयितुं प्रयत्नं कुर्वताम्। नो चेत् महद् आन्दोलनम् प्रारप्स्यते।

उदाहरणस्याऽस्य असामयिकत्वाद् अप्रासङ्गिकत्वादेव चाऽत्र पञ्चमीविधायकं सूत्रं मया न लिख्यते। यदि च भविष्यत्काले एवंविधा मूर्खतापूर्णाः प्रश्नाः करिष्यन्ते तदा परीक्षकं विरुध्य प्रदर्शनम् आन्दोलनं च भविता।

## परीक्षार्थिनः सम्पूर्ण-विवरणम्

भूतपूर्वराज्यमन्त्रिणः पञ्चमः पुत्रः, वर्तमानकुलपतेः श्यालस्य मित्रस्य भ्रातृव्यः द्वयोः हत्याकाण्डयोः अभियुक्तः। छात्रसंघस्य भूतपूर्वः उपमन्त्री,

विश्वविद्यालयस्य पूर्वकुलपतेः काले 'कुलपतिम् अपसारयत' इत्यान्दोलनस्य संयोजकः, ४२० संख्याऽनुक्रमाङ्कसम्पन्नः श्री सज्जनकुमारनामधेयः।[1]

किम् अधिकेन, मम विषये साम्प्रतम् इयमेव सुप्रसिद्धिर्विश्वविद्यालये–

करे वामेतरे मे स्यात् छुरिका चमचमायिता,
विगलन्ति मुखाच्चैव गालीशब्दा निरन्तरम्।
रौद्ररूपमिदं दृष्ट्वा गुण्डादल-समन्वितम्,
अद्य यावत् परीक्षायां कस्यामपि परीक्षकः।
अनुत्तीर्णं विधातुं मां कोऽपि 'सज्जो न' वर्तते,
तस्मात् 'सज्जन' नामाऽहं पृथिव्यां प्रथितोऽभवम्।।

●

---

१. तस्मिन् शताब्दे तत्कालीन-नवशिक्षा-नीतिमवलम्ब्य परीक्षार्थिभ्यो निजं सम्पूर्णं विशिष्टं विवरणप्रदानम् आवश्यकं भविष्यति येन परीक्षकाणां कृते मूल्याङ्कनकाले अङ्कप्रदाने सौकर्यम् भवेत् तस्य च जीवनं निरापदं स्यात्।

परीक्षार्थि-प्रदत्त-विवरणाऽनुसारमेव परीक्षकास्तेषां महत्त्वं विज्ञाय स्वकीयं भूतं भविष्यत् च यथाविवेकम् अनुमाय अङ्कप्रदाने कृपणताम् औदार्यं वा वर्तयिष्यन्ति।

# मम मूर्तिमत् पौरुषम्

तदानीन्तन एष वृत्तान्तो यदाऽस्माकम् आयुः पञ्चविंशतितमे वर्षे प्राविशत्। अहम् अविवाहितो ब्रह्मचारी बभूव। यद्यपि विवाहस्य वार्त्ता यत्र-तत्र चलति स्म किन्तु कुत्रचिदपि किमपि तावत् निश्चितं नाऽभवत्।

अस्तु, अस्माकमेव नगरे श्री पं० रामदयालुमहोदयोऽपि प्रतिवसति स्म। स नगरस्य प्रख्यातः अधिवक्ता आसीत्। तस्यैव एका प्रियंवदा नामधेया कन्या रूपवती विवाहयोग्या च बभूव। प्रियंवदया सार्धमपि अस्माकं विवाहस्य चर्चा तदानीम् प्रवर्तते स्म। यद्यपि पूर्वमपि प्रियंवदाया गृहे मम गमनं यदा कदा भवति स्म किन्तु तया सह विवाहप्रस्तावाऽनन्तरम् तत्र मम गमनाऽऽगमनं किञ्चिदधिकमेव सञ्जातम्। प्रायः प्रतिसप्ताहम् एव तत्रत्यैः पारिवारिकजनैः परिवृत्तस्य मम चायपानादिकम् अवश्यम् प्रवर्तते स्म।

तत्र गमनात् पूर्वं निजवस्त्रेषु पटवासकं निक्षिप्य सुगन्धितं कृत्वा, उपानहौ च चमत्कारेण परिमार्ज्य, केशादिकमपिं नवविन्यासेनाऽऽकर्षणसक्षमं यदा विरचयामि स्म तदा स्वस्माद् अधिकतरं युवानं रूपवन्तं च पुरुषं संसारेऽस्मिन् कमपि नैव मेने।

यद्यपि साम्प्रतं तु तानि सर्वाणि मूर्खतापूर्णानि कृत्यानि स्मारं स्मारं मया विहस्यते एव।

अस्तु, तस्मिन् दिनेऽपि यथापूर्वम् मम तत्र गमनस्य कार्यक्रमः सुनिश्चितः। मध्याह्नत एव वस्त्रेषु प्रैसं कारयित्वा, पटवासकं च निक्षिप्य, दर्पणस्य समक्षं वारद्वयम् आत्मानं निपुणतया सज्जीकृत्य सायङ्कालात् प्राग् एव तत्र रिक्शाद्वारा प्रस्थितोऽभवम्।

अथ सायंकालीन-चायपान-वेलायाम् अहं यदा तत्र समुपस्थितोऽभवं तदा तत्रस्थं दृश्यं विलोक्य विचित्रम् एव किञ्चिद् अनुभूतवान्। मया दृष्टं यत् स्वागतकक्षस्य सर्वाणि वस्तूनि स्वस्थानभ्रष्टानि यत्र-तत्र विकीर्णानि दृश्यन्ते स्म। सोफादिकानि उपवेशनानि च बहिरासन्। सर्वे च तत्र पारिवारिकाः सदस्या उद्विग्नाश्चिन्तानिमग्नाश्च प्रतीयन्ते स्म। कस्यचित् हस्ते हाकीदण्डम् आसीत् पुनरपि स भयभीतो दृष्टः, कस्याश्चिद् ओष्ठयोः लिपस्टिक-लेपेऽपि मुखे रङ्गविहीनता एवाऽभवत्, कश्चिद् भृशं व्याकुलः कम्पमानस्तिष्ठति। यथापूर्वं न तत्र कश्चिदपि हासविन्यासः, नैव विसंवादः, नाऽपि मनोरञ्जनवार्त्ताः केवल 'त्राहि-त्राहि' इत्यात्मकम् एव भयसमन्वितं तत्रत्यं वातावरणम् असीत् ।

शनैः शनैः अहं तस्य कारणमपि ज्ञातवान्। वस्तुतः स्वागतकक्षे तस्मिन् न जाने कुतः कश्चित् कृष्णसर्प आगत्य प्रकटितो बभूव तथा च केनचित् अचतुरेण आहतः स व्रणितो भूत्वा न जाने क्व तत्रैवाऽन्तर्ध्यानताम् प्राप्तवान्। स आहतः सर्पश्च प्रतिशोधाय आक्रमणमपि पुनः कर्त्तुं शक्नोति इति विचार्य तत्र सर्वे जनाः चिन्तापरवशा आसन्।

अस्तु, यदैवाऽहं तत्र स्वागतकक्षस्य द्वारे सावधानचेतसा दिदृक्षुरिव मुहुर्मुहुः प्रवेष्टुं प्रारेभे, प्रियंवदा माम् पृष्टवती–'किं भवान् अपि सर्पाद् बिभेति?'

स्पष्टमेवाऽऽसीत् सा एतस्य प्रश्नस्य उत्तरसन्दर्भे संभवतः मम मुखात् 'आम्' इत्येवोत्तरं श्रोतुकामा बभूव। अन्यथा इमम् प्रश्नमेव नाऽकरिष्यत्। पुनरपि मयाऽत्यन्तं विश्वस्तेन स्वरेण उत्तरितम्–'अरे! अत्र खलु भयस्य का वार्त्ता?'

तद् आकर्ण्य प्रियंवदाया अपि चक्षुषोः प्रसन्नताजन्या चमत्कृतिरुत्पन्ना बभूव। अहमपि स्वकीयेन उत्तरेण परमसन्तुष्टः सञ्जातः। अथ सा प्रोवाच–'सत्यमेव कथितं भवता। यदा किल कस्मिंश्चिद् दिने तु मरणम् अपरिहार्यमेव वर्तते तदा सर्पाद् एव कथम् एतावद् भयं भवेत्?'

प्रियंवदाया वचनं समाकर्ण्य तस्या भ्रातृजाया कथयति–'अयि! प्रियंवदे! किमिदम् विचित्रं कथयसि? प्रत्येकस्तु त्वादृशो निर्भयो साहसी च भवितुं नैव शक्नोति। मम हृदयं तु सर्पस्य नामधेयमेव श्रुत्वा कम्पतेतमाम्।'

एतस्मिन्नेव समये पं० रामदयालुमहोदयः, यः खलु जानुपर्यन्तम् उपानहं परिधाय हस्ते च स्थूलमेकं दण्डं गृहीत्वा तत्र तमेव सर्पं निपुणं मार्गयति स्म, प्रोक्तवान्–"भयकारणाद् वस्तुनो निर्भयत्वमपि दुःसाहसिकताम् असमीचीनत्वं च द्योतयति। यदि चाऽस्मिन् समये सर्पो न हनिष्यते तर्हि रात्रौ तु चक्षुषि निद्राऽपि नाऽऽगमिष्यति।"

**प्रियंवदा**–'पितृमहोदयास्तु वस्तुतः एव अत्यधिकं भयभीता दृश्यन्ते।'

तदनन्तरं पं० रामदयालुमहोदयो मां सम्बोध्य पप्रच्छ–"किम् भो! किं भवान् अपि 'सर्पाद् भेतव्यम्' इति पक्षे वर्तते?'

अहञ्च प्रियंवदायाः नेत्रयोः पुनस्तामेव प्रशंसासूचिकां चमत्कृतिं द्रष्टुकाम उवाच–'अधुनापर्यन्तं तु भयस्य अवसरः कदापि न समागतो मम जीवने। बहुधा चाऽस्माकं सर्पेण सह साम्मुख्यमपि जातम्।'

**पं० रामदयालुः** (साश्चर्यम् उक्तवान्)–'साम्मुख्यम् अभवत्? अर्थात् त्वया सह बहुधा तस्य आक्रमणाऽवसरः समुत्पन्नः? अस्तु पुनः किम् अभवत्....?'

अहम् प्रत्युवाच–"अभूत् किम्? ....गृहीतम् मारितं च।"

मम वचनमाकर्ण्य पं० रामदयालुमहोदयः चीत्कारमिव कुर्वाणः प्रोक्तवान्–गृहीतम् .......? अर्थात् त्वं विषधरं निगृहीतवान्? कथमेतत् सम्भवम्? त्वं स्वहस्तेनैव स्वयं विषधरं गृहीतवान्?"

**अहम्**–"आम् श्रीमान्! अन्ततः अत्र किम् आश्चर्यकरं वृत्तान्तम्? सर्पस्य हननाय तु सर्वोत्तम एष एव उपायो वर्त्तते यत् तस्य पुच्छं सहसा निगृह्य उच्चैः वेगेन च समुत्क्षेपणं (झटकना) कर्त्तव्यम्। तथा करणेन चाऽकस्मादेव तस्याऽस्थिभङ्गो भवति येन स सर्पितुम् असमर्थो जायते। सर्पणेऽसमर्थश्च भुजङ्गमः अत्यन्तं सारल्येन हन्तुं शक्यते।"

मम तादृशानि वीरतापूर्णानि वचांसि समाकर्ण्य प्रियंवदायाः लघुभगिनी माधुरी (मम भाविनी श्याली?) प्रोक्तवती–"किम् एतद् भवान् कथयति? सर्पस्य पुच्छमपि कथं शक्यते मुष्टिना निग्रहीतुम्? अहं तु मृतस्य सर्पस्याऽपि पुच्छं ग्रहीतुं न समर्थाऽस्मि।"

ततः सर्वे तत्र परिवारसदस्याः मम परितः स्थित्वा आश्चर्यचकिता इव बभूवुः। प्रियंवदा तु तदा माम् अत्यन्तं गौरवान्विताभ्यां नयनाभ्याम् पश्यन्ती तिष्ठति स्म। अहमपि चैतत् तदा अनुभवामि स्म यत् सा मनसि एव महाप्रसन्नतामनुभूय संभवतः एतदेव विचारम् अकरिष्यत् यद् अस्माकं भावी पतिः कीदृशः साहससम्पन्नो निर्भयः पौरुषयुक्तश्च वर्तते।

अस्तु, स्वागतकक्षे शनैः शनैः सोफादिकानि उपवेशनानि पुनः सज्जीकृत्य अस्माभिः सर्वैः तत्रैव समुपविष्टम्। प्रियंवदा च पुनस्ताम् एव चर्चाम् औत्सुक्यवशात् प्रारभमाणा उवाच–'अहो! भवता तु कथितमेव न हि यत् केन प्रकारेण सर्पस्य पुच्छं गृह्यते?'

अहम् अनायास एव प्रोक्तवान्–अरे! न हि कश्चिदत्र विशेषः प्रकारो भवति। केवलम् अत्र साहसस्य निर्भयतायाश्च आवश्यकता भवति। अस्माकं तु दृष्टिपथे यदैव कश्चित् सर्पो भवति तदाऽहं झटित्येव तस्य पुच्छं प्रतिगृह्य सहसा समुत्क्षिपामि येन तस्याऽस्थिभङ्गो जायते।'

**पं० रामदयालुः** (मम वचांसि श्रुत्वा उवाच)–'अहो! आश्चर्यम्!! अद्भुतो भवताम् एष सर्पमारणविधिः! प्रशंसार्हः साधुवादपात्रश्च भवान्।'

**प्रियंवदा**–'भवता कियान् दीर्घकायः सर्पः प्रतिहतः?'

**अहम्**–'मीटर-द्विमीटर पर्यन्तं च लम्बायमानाः बहवः सर्पा हताः परन्तु एकदा मम भयानकेन नागेन सह साम्मुख्यं सञ्जातम्।'

**पं रामदयालुः**–'किम् उक्तवान्? नागेन सह।'

**अहम्**–'आम् श्रीमन्! अत्यन्तं कृष्णकायः स प्राय; मीटरद्वयाद् अप्यधिको लम्बमानः मार्गे एव कुण्डलं कृत्वा मण्डलाकारः सन् महाफणं विधाय फूत्कुरुते स्म। तत्रस्थानां पथिकानां च मध्ये कस्याऽपि तत्सन्निधौ गमनस्य साहसमपि न प्रवर्तते स्म।'

**सर्वे**–'अहो! पुनः किं संवृत्तम्?'

**अहम्**–'पूर्वं तु अहमपि तमवलोक्य स्वेदस्नात इव सञ्जातः किन्तु शीघ्रमेवात्मानं सुस्थिरीकृत्य स्वकोटवस्त्रम् उत्तार्य तस्योपरि सहसा क्षिप्तवान्। यदैव च स तस्मिन् कोटवस्त्रे व्यस्तः सञ्जातस्तदैवाऽहं तत्क्षणमेव तस्य पुच्छं दृढं निगृह्य वारद्वयं सबलं समुत्क्षिप्तवान् येन च तस्याऽस्थिभङ्गः सञ्जातः। तदनन्तरं चाऽहं तं प्रस्तरखण्डैः हतवान्।'

**सर्वे** (दीर्घं निःश्वस्य)–'अहो! आश्चर्यकरम् एतद् वृत्तान्तजातम्!! भवादृशा निर्भयाः साहससम्पन्नाश्च युवानः धन्याः प्रशंसनीयाश्च।'

**अहम्**–'तस्य महानागस्य निधनवृत्तान्तमाकर्ण्य समीपस्था निवासिनः समागत्य माम् अभिनन्द्य स्वस्कन्धेषु च समारोप्य सोत्साहम् उत्सव इव मेनिरे। यतो हि तत्र तेन महानागेन बहवो मानवा निहता आसन्। तथा च........।'

इत्येवम् मयि कथयत्येव सति तत्र भूकम्प इव सञ्जातः। कश्चित् सोफासहितमेव पपात, कश्चित् सोफासनमारुह्य स्थितः सन् क्रोष्टुमारब्धवान्। पं० रामदयालुमहोदयोऽपि द्वारस्य समीपस्थं कुर्सी-आसनस्योपरि



समारुह्य उच्चैराचुक्रोश–'स निःसृतः......असौ वर्तते तत्र सर्पः! .... पश्य पुनः कुत्रचित् प्रच्छन्नो न भवेत् .... पलायितो न स्यात्.....।'

वस्तुतः यस्मिन् पर्यङ्के समुपविश्य सर्पविषयकं स्वपराक्रमवर्णनं करोमि

स्म, तस्यैव वस्त्रपट्टिकासु (निवाडवस्त्रेषु) क्वचित् स सर्पः प्रविश्य प्रच्छन्न आसीत् यम् अन्वेष्टुकामा हन्तुकामाश्च ते सर्वे पूर्वं तत्परा बभूवुः।

अस्तु, तं कृष्णसर्पं विलोक्य मम शरीरं कम्पितं सञ्जातम्। अहं तु भयाद् उत्प्लुत्य सहसा प्रियंवदायाः पृष्ठतः समागतः। पूर्वं तु प्रियंवदा ज्ञातवती यदहं तस्य पुच्छं निग्रहीतुं सम्भवतः स्वयुद्धकौशलाऽनुसारं मुद्राविशेषं (पैंतरा) साधयामि किन्तु यदाऽहं तस्याः पृष्ठे एव स्थित्वा किमपि न कृतवान्, अथ च स सर्पः शनैः शनैः अस्मदभिमुखमेव प्रचलितस्तदा सा प्रोच्चैः क्रुष्ट्वा प्रोवाच– 'पश्यतु तस्य पुच्छम् भवान्, कृपया निगृह्णातु, ..... समुत्क्षिपतु शीघ्रमेव तत्! ......।'

एतद्वाक्यान्तं तु मया प्रियंवदाया अन्येषामपि च वाक्यानि कर्णगोचरीकृतानि। तदनन्तरं च शब्दाः शनैः शनैः मम कर्णाभ्यां दूरत इव सञ्जाताः। पुनः किम् अभूत् इति त्वहं न जानामि किमपि। यदा चेतना समागता तदा ज्ञातवान् यद् अस्माकं चरणौ हिम इव शीतलौ वर्तेते प्रियंवदायाः भृत्यः शनैः शनैः मम पादस्य तालुनी परिमृजन् आस्ते। तेनैव भृत्येन चाऽहं संज्ञापितो यत् स सर्पस्तु प्रियंवदाद्वारा निहतः। सर्वे च मम मूर्च्छायाः चर्चां' कुर्वाणाः हसन्तः समासते।

अथ क्षणाऽनन्तरं श्री पं० रामदयालुमहोदयो मम समीपमागत्य प्रोक्तवान्–'अहो! समागतं चैतन्यम्? अनेन सर्पेण तु तवैव पुच्छं तथा समुत्क्षिप्तं यत् सर्वम् आश्चर्यकरमेव संवृत्तम्। पूर्वं तु अस्माभिः ज्ञातं यत् स सर्पस्त्वामेव दंष्टवान् किन्तु यदा चिकित्सकेन आगत्य उक्तं यत् केवलं भयवशादेवाऽयं मूर्च्छितः सञ्जातः तदनन्तरमेव वयं दुश्चिन्तया मुक्ता अभूम।'

अन्ततः कियत्कालपर्यन्तमहमपि तत्र तूष्णीम् अभविष्यम्? लज्जाम्परित्यज्य बहुकाठिन्येन एवं वक्तुम् आरब्धवान्–

"नाऽहम् अवगच्छामि किञ्चित्, न जाने सहसा किम् बभूव.....?"

मम वचनमाकर्ण्य माधुरी कथयति–"अरे! बभूव किम्! भवान् सर्पम् आलोक्य भयभीतः सन् मूर्च्छितः सञ्जातः ....अपरं किम्?"

अस्तु, तस्मिन् दिने मम जीवने यद् हास्यं संवृत्तं सम्भवतः तत् सर्वं मम भाग्ये एव विधिना लिखतमासीत्। तद्घटनाऽनन्तरं बहुकालेभ्यः पश्चात् यदा प्रियंवदा स्वपत्या सह एकदा अकस्मादेव क्वचित् माम् मिलितवती तदा स्वपत्या सह मम परिचयं कुर्वाणा एवम् अब्रवीत्–'एतान् महोदयान् मिलन्तु भवन्तः..... एते खलु श्रीमन्तः प्रशस्यमित्राः शास्त्रिणः ..... अत्यन्तं पराक्रमिणः साहसस्य प्रतिमूर्त्तयः निर्भीकाः पुरुषाश्च।' इति।।

•

# चक्रमेतद् विचित्रम्

'ते' अकस्मादेव मम समीम् आगत्य स्थिता अभूवन्! अहं नैतद वक्तुं शक्नोमि यत् ते कुतः समागताः किन्तु तेषां मुखाकृतिं विलोक्य मया विचारितं यत् ते संभवतः किञ्चित् परिचिता इव वर्त्तन्ते।

तेषाम् महोदयानां मुखमण्डले मन्दस्मितिर्विराजते स्म, चक्षुषी रक्तोत्पले इव बभूवतुः, दन्तपंक्तिश्च ताम्बूलरङ्गेन समन्विता आसीत्। तेषां खादीर्निमितं वस्त्रं तु अत्यन्तं धवलं सुसज्जितं च बभूव। मया ध्यानं दत्तं यत् ते एकाकिनः न आसन् अपितु तैः समम् एका सम्पूर्णमानवपंक्तिरेवाऽभवत्। ते च सर्व एव प्रायः एकया विशिष्टमुद्रया समन्विता एव विराजन्ते स्म।

"अरे! भ्रातः!! शास्त्रिमहोदय! ......साम्प्रतं क्व निवसति भवान्? बहुदिवसात् दृष्टिपथं नाऽऽगतः भवान्" इति वाक्यमेतत् ते एवं प्रकारेण उक्तवन्तः यथाऽहं तैः सह प्रतिदिनं संगच्छामि–इति प्रतीयते स्म। परन्तु सत्यं त्वेतद् आसीत् यदहं तान् अधुनाऽपि नैव पर्यचिनोम्।

अहम् प्रणाममुद्रायाम् अञ्जलिं बद्ध्वा प्रत्युक्तवान्–"किं कथयेयमहम् साम्प्रतं समय एव नोपलभ्यते। गृहस्थस्य प्रपञ्चेषु पतितः सन् समयमेव न प्राप्नोमि।"

"किम् एतस्मिन् सङ्कटकालेऽपि मम स्मृतिः भवताम् मनसि न समागता।" इति तेषामेतद् वाक्यं मधुरं शर्करासमन्वितमिव मुखात् निःसृतम्। परन्तु नाहं ज्ञातवान् यत् ते कस्य संकटस्य चर्चाम् अत्र मत्समक्षं कुर्वन्ति।

ततोऽग्रे 'ते' एवम् अब्रुवन्–'किन्तु संकटमिदं न केवलम् भवतामेवोपरि प्रत्युत समग्रे देशे समागतो वर्तते। अस्य संकटस्य च प्रतीकारस्तु अस्माभिः सर्वैः एकीभूय एव कर्त्तव्यः। साम्प्रतं देशस्य इयं दुरवस्था जाता यत् सज्जनः पुरुषः सर्वत्र प्रताड्यते पीड्यते च।'

उपदेशरूपात्मकं तेषामिदं वाक्यं समाकर्ण्य मयापि चिन्तितं यत् तेषां वाक्ये पर्याप्तं सत्यता वर्त्तते तथा च अहं वस्तुतः संकटापन्नो भवामि। यतो हि–गृहे प्रत्यहं भार्यायाः प्रताडनवाक्यानि श्रृणोमि, यात्राकाले च बसयाने परिचालकेन सह विवादेऽपि सञ्जाते मम तूष्णीम्भाव एव सम्मानं सुरक्षयति, कार्यालयेष्वपि माम् अधिकारिणः समुद्वेजयन्ति महाविद्यालये च छात्रनेतृभ्यो बिभेमि, राजमार्गेषु निशायां गुण्डादलमपि छुरिका-पिस्तौलादि-बलात् पाकेटधनं घटीयन्त्रं च साहसपूर्वकम् अपहरति, एवमेव यदि गोपालः अस्माकं दुग्धे जलं मिश्रयेत् आपणिकश्च डालडाघृते वसां मिश्रयेत् तदापि किमपि वक्तुं

न शक्यते। भवनस्वामी प्रतिवर्षमेव किरायाभाटकं वर्धयते अस्माभिश्चाऽनिच्छयाऽपि तत्स्वीकाराय बाध्यते, कण्ट्रोलाऽऽपणे पञ्चघण्टापर्यन्तं पंक्तिबद्धो भूत्वाऽपि यदाऽस्माकम् अनुक्रमः आगच्छति तदा आपणिकः घोषयति यत् मृत्तैलं शर्करा च समाप्ता सञ्जाता। यद्यपि अहं जानामि यत् स असत्यं वक्ति परन्तु किमपि कर्त्तुं न शक्नोमि। ....एतत्सर्वं विचार्य प्रतीयते यत् साम्प्रतं सज्जनानां जीवनं वस्तुतः अतीव कष्टप्रदं सञ्जातम्। इत्येवं सर्वं विचारयत्येव मयि तदानीं 'ते' पुनः अवादिषुः–

'........पुनः किं करोति भवान् अस्य प्रतीकारार्थम्?'

'.........जी........अहम्.......अहमत्र किं कर्त्तुं शक्नोमि?'

'.......अहो! भवान् कथं कर्त्तुं न शक्नुते? भवांस्तु स्वशक्त्या परिचित एव न वर्त्तते।'

'नाऽहं जानामि यद् भवन्तः कस्याः शक्तेः वार्ताम् अत्र कुर्वन्ति....अहं तु.......।'

'अरे भ्रातः! मतदानस्य शक्तेः वार्त्तामहं करोमि, भवदीयं मतं किं कर्त्तुं न शक्नुते? मतदानस्य शक्तिस्तु भ्रष्टाम् एनां व्यवस्थां परावर्त्तयितुं सक्षमा। सा तु सर्वकारमपि परिवर्त्तितुं शक्नोति। प्रतीयते यद् भवता अस्मिन् विषये कदापि चिन्तितमेव न। यदि भवादृशा बुद्धिजीविनः प्राध्यापका अपि अत्र उदासीनाः भवेयुस्तदा देशस्य किम् भविष्यति?'

'किन्तु.....मतपत्रं तु केवलं कर्गदस्य एकं खण्डम्.......।'

'सत्यमेव कथयति भवान्। यदि तत् मतपत्रं मह्यं प्रदास्यते तर्हि मत्कृते तत् सर्वेषां भवतां शक्तीनां प्रतीकं भविष्यति।'

मयाऽपि विचारितं यत् साम्प्रतिकीं व्यवस्थाम् एनां परिवर्त्तयितुम् एकवारं तु मया 'तेभ्य' एव मतं प्रदातव्यमेव। अत एव मतदानस्य दिने मया 'तेभ्यः' स्वमतं प्रदत्तम्।

अथ च 'ते' निवार्चने विजयिनः सञ्जाताः।

अहमपि महाप्रहृष्टोऽभूवं यद् अधुना सम्पूर्णा एषा व्यवस्था सुधारताम् एष्यति। साम्प्रतं च कश्चिदपि मनुष्यः कमपि मादृशं सज्जनपुरुषं पीडयितुं साहसं नैव करिष्यति।

अस्तु, तदनन्तरम् अहम्प्रत्येकम् अन्यायकृत्यं विरुध्य योद्धुम् प्रारब्धवान्।

किन्तु दुःखम्......! महादुःखम्!! यत् सर्वे एव ते भ्रष्टाः पुरुषाः मां तथैव पूर्ववत् पीडयन्ति स्म। अहं च सर्वत्रैव पुनः प्रताडितः उपेक्षित अपमानितश्च भवामि। कण्ट्रोलाऽऽपणिकः, बसपरिचालकः, परचूनविक्रेता,

दुग्धविक्रेता, गुण्डादलनायकः प्रभृतयः सर्वे एव तथैव यथापूर्वम् माम् पीडयन्ति धर्षयन्ति अवमानयन्ति च।

परम् अधुना तु नाऽहं भयग्रस्तः सञ्जातः। अहं सद्य एव 'तेषां' पार्श्वे गतवान्। मम सौभाग्यम् आसीद् यत् 'ते' तदानीं स्वगृहे एव विद्यमानाः आसन्। मयि तत्र आगच्छत्येव ते स्वविशिष्टे कक्षे माम् प्रेम्णा स्वसमीपम् एव उपावेशयन्। तत्र मया दृष्टं यत् तस्य कक्षस्य परितः गृहभित्तिकासु बहूनि द्वाराणि वर्तन्ते।

अहं तत्र उपविष्टः सन् विस्तरशः वर्णनं कृत्वा 'तान्' निवेदितवान् यत् अधुना तेषां विजयाऽनन्तरमपि ते सर्वे भ्रष्टाचारिणः मादृशैः सज्जनैः सह तथैव व्यवहरन्ति तथैव च यथापूर्वं सज्जनान् परिपीडयन्ति।

'ते' मम सर्वां वार्त्ताम् अत्यन्तं ध्यानेन चेतसा श्रुतवन्तः। तदनन्तरं च सोच्चैः ते कमपि समाकारितवन्तः। तेषाम् आवाहन-समकालमेव मया साश्चर्यम् अवलोकितं यत् तस्य कक्षस्य भित्तौ स्थितानि सर्वाणि द्वाराणि सहसा समुद्घाटितानि। तदनन्तरं च तेभ्यो द्वारेभ्यः शनैः-शनैः एकैका पुरुषाकृतिः प्रकटीभवति।

अहं सावधानतया एतान् द्रष्टुम् आरब्धवान् तथा च दृष्ट्वैव तान् सर्वान् अपि परिचितवान्। अहो! ........इमे तु सर्वे त एव पुरुषाः वर्त्तन्ते ......स एव कण्ट्रोलाऽऽपणिकः.......दुग्धविक्रेता.......परचून विक्रेता......बसयान-परिचालकः.......गुण्डादलनेता......प्रभृतयः.........।

ते सर्वे मां तत्र निपुणं निरीक्षयन्ति स्म। अहं चकितः सञ्जातो यद् इमे सर्वे अत्र कथं समागता वर्त्तन्ते?

तान् सर्वान् एव निर्दिशन्तः समादिशन्तश्च 'ते' प्रोक्तवन्तः–'अरे! पश्यत भो! ....इमे शास्त्रिमहोदयाः अस्मीदया एव वर्त्तन्ते। केचन इमे प्रताडयन्ति, उद्वेजयन्ति पीडयन्ति च। यूयं गच्छत तथा च पश्यत यत् के खलु एवं कुर्वन्ति?'

तदनन्तरं च 'ते' मदभिमुखं भूत्वा प्रोचुः–'भवान् एतान् कथयतु निर्दिशतु च यत् के खलु भवन्तम् पीडयन्ति प्रताडयन्ति च। इमे सर्वे भवतः साहाय्यं विधास्यन्ति।'

अहम् भयभीतः परित्रस्तश्च 'तान्' उवाच–'न हि, न हि..... कोऽपि न माम् पीडयति स्म.... अहं तु एवमेव परिहासं करोमि स्म......' इति चोक्त्वा चाऽहं तत्क्षणमेव ततः पलायितः।

पलायनकाले च मयाऽनुभूतं यत् मम पृष्ठतः तेषां सर्वेषां समवेतः अट्टहासः प्रतिध्वनितो भवन् वर्धतेतमाम्।

●

# ओम् शान्तिः शान्तिः शान्तिः

अधुना आवास (मोहल्ला) निवासिनः रात्रौ शयनम् आरब्धवन्त एवाऽऽसन् इति तस्मिन्नेव काले 'त्राहि-त्राहि' इति कोलाहलशब्देन सर्वे जागरितवन्तः। ते सर्वे स्वकीयेषु प्राङ्गणेषु तत्कारणं ज्ञातुकामाः कौतुकं द्रष्टुकामाश्च सौम्यपरिधानेषु सज्जीभूताः स्वपत्नीभिः समं समुपस्थिता बभूवुः। संभवतस्तत्र केचिद् विचारयन्ति स्म यत् यदि किमपि दर्शनीयं स्यात् तर्हि दर्शनस्य कष्टं कर्त्तव्यम्।

तत्र पारस्परिकः कोलाहलः 'त्राहि त्राहि' इति शब्दश्च कदाचित् शनैः कदाचिच्च उच्चैर्भवति स्म। मोहल्लानिवासिनश्च ते शोधकार्ये एवं भाषमाणाः प्रवृत्ताः–

'सम्भवतः पञ्चदशसंख्याके आवासस्थले किमपि भवति।'

'न हि भो षोडश्यां फ्लैटसंख्यायां भवति।'

'कश्चित् चौरः स्यात्।'

'दस्युरपि सम्भाव्यते।'

'न हि भो! दस्युस्तु नैव संभवति। दस्यवो ग्रामे आगच्छन्ति न तु नगरे।'

'नगरेऽपि नागरा दस्यवो भवन्ति। साम्प्रतं च किंचिदपि संभवम् अस्ति।'

'अरे! तत्र कश्चिद् गच्छेत् तदैव वास्तविकी स्थितिः शक्यते ज्ञातुम्।' ....इत्यादि।

एतस्मिन्नेवाऽन्तरे तत्र मोहल्लायाः रात्रिकालीनो गोरखा-प्रहरी दृष्टिपथे समागतः। तं निरुध्य सर्वे प्रष्टुम्प्रारब्धवन्तः–

'किम् भो! बहादुर! किमभूत् तत्र?'

'शाहब! तत्र कलहः प्रवर्त्तते। केचित् सुरापायिनः प्रमत्ताः श्रीमन्तं मिश्रमहोदयम् मारयन्ति।'

'अरे! चौरास्तु न सन्ति, आगम्यताम् भवद्भिः....... अयि नागर साहब! राधे लालजी! द्विवेदी जी..... आगच्छन्तु......तत्रैव गत्वा पश्यामः यत्....।'

एवम् आवाहयन्तो यदा ते सर्वे स्वकर्त्तव्यपथे प्रचलन्ति तदा तेषां पत्न्यः स्वपतीन् सम्बोधयन्ति–'भवद्भिस्तत्र किञ्चिद् दूरत एव भाव्यम् मद्यपानाम् उन्मत्तानां को विश्वासः?'

ते सर्वे मिश्रमहोदयस्य निवासस्थलस्य समक्षं स्थित्वा पश्यन्ति स्म यत्

श्री मिश्रमहोदयः केनचित् मद्यपेन सह युद्धे प्रवर्तमानो वर्त्तते। तद् युद्धं विलोक्याऽपि शान्तिप्रियास्ते दूरत एवं स्थिता अभूवन्। तत्र केचित् तु दृष्टवर्णनं (कामेण्ट्री) कर्त्तुम् एवं प्रारब्धवन्तः–

'मिश्रमहोदयस्ताड्यते।'

'न हि सम्प्रति तु स मद्यप एव पराजयते।'

'आम्, भो! मिश्रमहोदयः प्रबलो भवति।'

'न हि भो पश्य, अधुना स प्रमत्तः पुनः प्रबलो भवन् मिश्रमहोदयम् मारयितुम् प्रारब्धवान्।'

अरे! शीघ्रमेव पुलिसकार्यालये दूरभाषं करणीयम्।'

'नागरमहोदयः सम्प्रत्येव फोनकरणार्थं गतवान्।'

'मन्ये पुलिसदलं शीघ्रमेव आगच्छेत्'......इत्यादि।'

अस्तु, एतन्मध्ये एव श्री मिश्रमहोदयः तं प्रमत्तं भूमौ पातितवान्। अथ तं मद्यपं धरायाम्पतितं विलोक्य तत्रस्थानां केषांचित् युवकानामपि हृदि वीररसस्य सञ्चारः प्रादुर्बभूव। ते वक्तुम् आरब्धवन्तः–

'मारय मारय।'

'ताडयत........श्यालम्।'

'न जाने श्यालः किं करणाय अत्र समागतः?'

'अरे चौरोऽयम् अपरं किम्?'

'अरे मद्यपानं कृत्वा चौरकार्यार्थम् आगच्छसि नीच!' इत्येवमादि।

एतस्मिन्नेवाऽनन्तरे भारतीयपरम्परानुसारं सूचनायाः प्रायः एकघण्टाऽनन्तरं पुलिस-दलं समागतम्। पुलिसदलं विलोक्य शनैः शनैः सर्वे मोहल्लावासिनस्ते स्वगृहेषु गन्तुं प्रारभन्त।

पुलिसाय सूचना दीयते यत् स प्रमत्तः निगृहीतो बद्धश्च वर्त्तते। श्री मिश्रमहोदयस्तं मद्यपं निगृह्य भवताम् एव प्रतीक्षायां वर्त्तते।

पुलिसं सक्रियं भवति अथ च तत्र आगच्छन्नेव सहसा श्री मिश्रमहोदयमेव वेत्रयितुम् प्रारभते।

**मिश्रमहोदयः**–'अहो! मृतवान् अहम्, अरे! मां कथं मारयथ? गुण्डा मद्यपस्तु अयं वर्त्तते, न त्वहम्।'

**पुलिसनिरीक्षकः**–'अहो! क्षम्यताम् भवान्...... (मद्यपम् अभिमुखं

भूत्वा) कथं भो! वेशविन्यासस्तु तव सज्जनानाम् इव वर्त्तते? अत एव वयमपि भ्रान्ताः........किन्तु श्याल!.....(वेत्रद्वयं पृष्ठे मारयित्वा) किंविधम् पीतवान्? ....ठर्रा .....ह्विस्की वा?'

'नाऽहम् पीतवान् साहब! अहं तु।'

'तूष्णीम् मूर्ख! ठर्रापानमेव प्रतीयते.....ह्विस्कीपायी एवंविधम् उपद्रवं न कुरुते।'

'न हि साहब! अहं तु.....।'

'तूष्णीं श्याल! ....अरे! मिश्र महोदय! सुरादीनां बोतलपात्राणि क्व वर्त्तन्ते?'

'बोतलपात्राणि किं करिष्यन्ति भवन्तः?'

'अरे भ्रातः! साक्ष्यं तु एकत्रीकरिष्यते न वा? ......एवं करोतु भवान्, भवतां समीपे तु मद्यानां बोतलानि भविष्यन्त्येव, कृपया तान्येव आनीयन्ताम्।'

'किन्तु...... (किञ्चिद् असमञ्जसतामनुभूय) साम्प्रतं तु रिक्तं मद्यबोतलं न वर्त्तते।'



'भवन्तस्तु बुद्धिमन्तः सन्तोऽपि बालका इव वार्त्तां कुर्वते। वयं रिक्तं बोतलपात्रं किं करिष्यामहे? साक्ष्यप्रतिपादनाय तु मद्ययुक्तेन बोतलपात्रेण भवितव्यम्..... तदेव च वयं साक्ष्यसमये प्रस्तोष्यामहे। यदि च तत् मद्यबोतलम् उच्चस्तरीयं स्यात् तदैव शोभनम्। ........भवान् एवं करोतु, यत् कुतश्चित् द्वि-त्रि-ह्विस्कीबोतलस्य प्रबन्धं करोतु..... वयम् अस्योपरि चौरकर्मणोऽपि अभियोगं प्रतिपादयिष्यामहे.....।'

'किन्तु...... अयं तु माम् आहतवान् अपि, पश्यतु भवान् अत्र व्रणः सञ्जातः?'

'अरे मिश्रमहोदय! भवान् कथं चिन्तयति? वयम् पुलिस-अधिकारिणः कथमत्र समुपस्थिताः? भवादृशाणां नागरिकाणां सहायतार्थमेव तु वयं वर्त्तामहे। भवान् बोतलानां प्रबन्धं करोतु सर्वं सम्यक् सम्पादयिष्यामहे वयम्।'

अथ तदनन्तरं स मिश्रमहोदयः ह्विस्की-बोतलानां प्रबन्धकरणे व्यस्तः प्रयत्नशीलश्च सञ्जातः।

अथ स मद्यपश्च आत्मानं मोचयितुकामः रूप्यकादिप्रदानाय तत्प्रबन्धाय च मनसि योजनाम् प्रारभते, तदर्थं च पुलिसनिरीक्षकेण सह वर्त्तालापकरणे प्रवर्त्तमानो भवति।

पुलिसविभागस्य ते सक्रियाः कर्मचारिणश्च निकटभविष्यत्काले विधीयमानस्य भोजन-पानादेः सुखदकल्पनायां निमग्नाः सञ्जाताः।

अथ मोहल्लानिवासिनश्च ते शान्तिपूर्वकं निद्रायां गन्तुकामाः स्व-स्व पर्यङ्के पुनः समारूढा भवन्ति।

शनैः शनैश्च सर्वतः शान्तिः संसरति.....ओम् शान्तिः शान्तिः शान्तिः।

●

# अयोग्यता

विद्यालयस्य छात्राः किमपि नायकम् अभिनेतुं निश्चितवन्तः। तत्र पात्राणां निर्वाचनाय एकं संक्षिप्तम् उपवेशनम् (बैठक) आहूतम्।

वार्त्तालापप्रसङ्गे नाटके पुलिस-अधिकारिणो भूमिकां को निर्वाहयिष्यति इति विचारणे वैमत्यं सञ्जातम्। नाटके च इयम् भूमिका अत्यन्तम् प्रभावोत्पादिनी विशिष्टा च बभूव।

अस्तु केनाऽपि छात्रेण प्रस्तावितं यत् पुलिसाधिकारिणो भूमिकायै यज्ञदत्तो योग्यतमो वर्त्तते। तस्य व्यक्तित्वं सुन्दरं प्रभावास्पदमस्ति संवादोपस्थापने च तस्य वाक्शक्तिः सबला मुखाकृतिश्च अनुरूपतमा भविष्यति।

'एवम्..... सत्यम्.......उचितमेवैतद्.......यज्ञदत्त एवाऽस्याम् भूमिकायाम् उपयुक्ततमम् पात्रम्' इति कृत्वा सर्वे तत्प्रस्तावं समर्थयामासुः।

'न हि भो........ नाऽहम् उपयुक्त एतदर्थम्.......... कथम् अहम् भूमिकामेनाम् उपस्थापयिष्यामि सम्यक्तया......।' यज्ञदत्तः व्याकुलः सन् उद्विग्नः प्रत्युवाच।

'न हि भो! .....त्वमेव समुपयुक्तः एतद्भूमिकायै। तव संवादोच्चारणप्रकारः प्रभावास्पदः, व्यक्तित्वं चाऽपि अत्यन्तम् उपयुक्ततमम् अतः त्वयैव एषा भूमिका निर्वाहणीया' इति कश्चित् सखा प्रोवाच।

'किन्तु.....।'

'किन्तु परन्तु किम्?'

'केवलं व्यक्तित्वेन संवादोच्चारणेनाऽपि वा पुलिसस्य भूमिका न शक्यते याथातथ्येन उपस्थापयितुम्।'

'किं तात्पर्यम्? .....त्वं किं कथयितुम् इच्छसि।'

'.........इदमेव वक्तुमिच्छामि यत् मम मुखात् नानाप्रकारका गर्हितगालिशब्दाः कथं निःसरिष्यन्ति..... अहन्तु ,कमपि अपशब्दं वक्तुं स्वभावतः न प्रभवामि......।'

यज्ञदत्तस्य तदेतद् वाक्यं श्रुत्वा तत्र तस्य नाम्नः प्रस्तावकानां मुखरता समाप्ता तेषाम् आननानि च नीचैर्भूतानि।

•

# स्वकर एव शङ्करः

तत्र ग्रामे एकमपि तथाविधं गृहं नाऽऽसीद् यत्र गत्वा तेन शतं रूप्याणि ऋणरूपेण न याचितानि। किन्तु सर्वत्र तेन नैराश्यम् एव प्राप्तम्। निर्धनस्य समीपे नैराश्यातिरिक्तम् अन्यत् किम् भवति? यदि भवति तर्हि केवलम् ऋणभार एव।

अद्य तु ग्रामस्य प्रत्येकस्मिन् गृहे महादेवस्य पूजनम्प्रवर्तते स्म। सर्वत्र पिष्टान्नमोदका निर्मीयन्ते वितीर्यन्ते च। परन्तु तस्य समीपे तु स्वोदरभरणाय एव यदा किमपि नास्ति तदा स मन्दिरे गत्वा भगवते भोगवस्तूनि कुतः निवेदयेत्? स इदमपि जानाति यत् प्रस्तरमहादेवस्य माध्यमेन पुजारिणः स्वीयमेव स्वार्थं साधयन्ति। न त्वयं महादेवः किमपि भोगजातं गृह्णाति।

उदासीनः चिन्तितश्च स ग्रामाद् बहिरागतः यत्र शङ्करमहादेवस्य मन्दिरे प्राङ्गणप्रस्तरे समुपविष्टः पुजारीमहोदयो भङ्गपेषणे व्यापृतो दृश्यते स्म।

'किम् भो! अद्य पूजाया दिवसेऽपि त्वम् इतस्ततो भ्रमणं करोषि?'

'पुजारीमहोदय! अद्याऽहं महोदवस्य पूजां न करिष्यामि।'

'किम् आह? पूजनं न करिष्यसि? अहो! एतत्तु अनर्थकरम्..... एवं तु भगवान् रुष्टो भविष्यति.....।'

'अरे बाबा! यो भगवान् मह्यं दत्तवान् एव न हि तदा तस्मै किमहं प्रदास्यामि? यदि स मह्यं किमपि अदास्यत् तर्हि अहमपि श्रीमन्त इव पूजाम् अकरिष्यम्'–स गम्भीरः सन् प्रत्युवाच।

'न हि वत्स! इदं तु तव भाग्यम् एव। एताभ्यां हस्ताभ्यां यथा कर्म त्वं करिष्यसि तथैव तु फलं प्राप्स्यसि..... अत एव भगवन्तं नैव दोषयुक्तं कुरु, तत्र त्वम् आक्षेपं न कुरुष्व.....।'

'यदि मम इमौ करौ एव भाग्यनिर्मातारौ फलप्रदायकौ च तदा अहम् इमौ स्वकीयौ करौ एव पूजयिष्ये' इत्युक्त्वा स ततः प्रस्थितः।

किञ्चित्कालाऽनन्तरं च स स्वहस्ते खनित्रमादाय कृषिक्षेत्राभिमुखं गम्यमानः अदृश्यत।

•

# इदमेव तु चारित्र्यम्

'सा' परिस्थितिवशाद् विवशतया वेश्यावृत्तिमाध्यमेन कथमपि निजजीवनं यापयति स्म। यतो हि दुर्भाग्याद् जीवनस्याऽन्यः कोप्युपायोऽपि नाऽभूद् अवशिष्टः।

अस्तु, एकस्मिन् दिवसे तस्या आवासस्थले कस्याऽपि हत्या बभूव। हत्या च तस्याः चक्षुषोः समक्षमेवाऽभवत्।



न्यायालये हत्याकारिणो विरुध्य अभियोगः प्रवर्तितः। हत्याकारिणस्ताम् ऊचुः यत् यथा ते कथयिष्यन्ति तथैव तया वक्तव्यम् इति। किन्तु सा उक्तवती यत् यथा मया दृष्टा तथैव न्यायालये कथयिष्यते।

परिणामतः तेऽभियुक्तास्तस्याः पुरस्तात् धनलोभम् प्रस्तुतवन्तः। पूर्वं तु ते केवलं दशसहस्ररूप्यकाणि तस्यै प्रेषितवन्तः किन्तु सा तद् धनं प्रत्यावर्त्तितवती।

हत्याकारिण ऊचुः–'पश्य, यथा वयं कथयामहे यदि तथैव त्वं करिष्यसि तदा तुभ्यं पर्याप्तं यथेच्छं च दास्यामहे' इत्युक्त्वा पुनस्तस्य पुरतः पञ्चाशत्-सहस्ररूप्याणि प्रस्तुतवन्तः।

परन्तु सा पुनरपि तत्सम्पूर्णमेव धनं ग्रहीतुम् असमर्थताम् प्राकटयत्।

हत्याकारिणः क्षुब्धाः सन्त ऊचिरे–'...श् श्याली.....वेश्या भूत्वा एवम् अस्माभिः सह व्यवहरसि?......शतरूप्यकैः विक्रय्या त्वं चारित्र्यम् अधुना दर्शयसि? ........तवाऽपि किमपि चरित्रं वर्त्तते किम्?........।'

'महोदय! इदमेव तु चरित्रम् अस्माकम् ........तत् (वेश्याकर्म) तु व्यवसायो वर्तते।' इति सा शान्तम् प्रत्युवाच।

●

# प्रेमपत्राणाम् परम्परा

प्राचीनसमये साधारणा जनाः पत्राणि प्रायः कदाचिद् विशिष्टावसरे एव लिखन्ति स्म। तस्य प्रेषण-व्यवस्था च स्वयमेव कुर्वन्ति स्म यतो हि तदानीं डाक-तार-विभागस्याऽस्तित्वमेव नाऽभवत्।

दमयन्त्या सह विवाहस्य सन्दर्भे स्वकीयं सन्देशं देवजनाः राज्ञो नलस्य माध्यमेन प्रेषितवन्तः। किन्तु तस्य दुष्परिणामश्चाऽयमभूद् यद् दमयन्ती नलेन साकमेव विवाहं कृतवती।

एवमेव एकः अस्माकम्परिचितः सेनायाम् अधिकारी आसीत्। स स्वगृहात् अतिदूरं नियुक्तः सन् प्रत्यहम् एकम्पत्रम् पत्नीं सम्बोध्य प्रेषयति स्म। परिणामतः तस्य पतिव्रता पत्नी पत्र-प्रदायकेन (पोस्टमैन) सहैव पलायितवती। अयं च स एव पत्रदायक आसीत् यः पत्युः पत्रं प्रत्यहं तस्य पत्न्यै प्रायच्छत्।

अत्र निवेद्यते मया यत् पत्नीम्प्रति पत्रलेखकाः कृपया सावधानमेव भवन्तु। नलदमयन्त्यौ च परस्परं स्वकीयं सन्देशं हंसद्वारा प्रेषितवन्तौ। तत्कारणं च नलस्य दूरदर्शिता एवाऽभवत्।

कालिदासस्य यक्षश्च यत् स्वकीयं सन्देशं निजपत्नीम् प्रति प्रेषयति स्म तत्र मेघ एव सन्देवाहकत्वेन परिवृतः। तेन दूरदर्शिणाऽपि पत्रवाहकरूपेण कश्चित् पुरुषो न नियुक्तः। मेघदूतं च तत् काव्यं वर्त्तते यद्विषये संस्कृत-साहित्ये 'माघे मेघे गतं वयः' इत्याभाणकम् उपलभ्यते। प्रतीयते प्राचीनाः जनाः परेषाम्प्रेमसन्देशपठनेनैव स्वकीयं जीवनं यापयन्ति स्म।



साम्प्रतमपि प्रेम-पत्राणां लेखने पठने च मनुष्याणाम् पर्याप्तम् आयुः व्यत्येति। अस्माकम् आयुषोऽपि पर्याप्तः समयः प्रेम-पत्राणां लेखने वाचने च व्यतीतः। साम्प्रतमपि वाञ्छामि यत् काऽपि स्यात् यस्यै प्रेम-पत्राणि लिख्येरन् किन्तु.....। मनुष्याणां जीवनस्य पञ्चदशवर्षाद् आरभ्य पञ्चविंशतिवर्षपर्यन्तस्य आयुषो भागः प्रेम-पत्रलेखनाय स्वर्णिमः कालो भवति।

प्रेम-पत्राणां सन्दर्भे इदं महत्त्वपूर्णं ज्ञातव्यं यत् प्रेम-पत्र-लेखने वैदुष्यं कथमपि अपेक्षितं न भवति। सन्तश्रीकबीरमताऽनुसारं तु प्रेम्णि केवलं सार्धद्वयम् अक्षराणि भवन्ति। यश्च तानि पठति स एव पण्डितो भवति। अत एव ते तु महापण्डिताः सन्ति यैः सम्पूर्णस्य प्रेम-पत्रस्य पठनाय सुवर्णावसरो लब्धः।

शकुन्तलाऽपि प्रेम-पत्रलेखने प्रवीणा आसीत्। दुष्यन्तस्तु अज्ञानी बभूव यः प्रेम-पत्रलेखनस्य स्वर्णावसरं हापितवान्।

मयाऽपि जीवने बहूनि प्रेम-पत्राणि लिखितानि प्राप्तानि च। साम्प्रतं साहित्ये महापुरुषाणां पत्रव्यवहारस्यापि प्रकाशनं क्रियते। यदि कोऽपि प्रकाशको मिलेत् तदाऽहमपि स्वकीयप्रेम-पत्रव्यवहारस्य प्रकाशनं कर्तुमिच्छामि। यद्यपि जानामि यत् तेषाम्प्रकाशनेन बहूनां गार्हस्थ्यं दोलायमानं भविष्यति शृङ्गाररसश्च वीररसे प्रवर्तिष्यते किन्तु साहित्यविधायाम् प्रेमपत्राणां प्रकाशनेन यः नवीनः पन्थाः प्रारप्स्यते तस्योद्घाटनश्रेयस्तु मयैव प्राप्स्यते।



# भ्रष्टाचारी

एकदा कश्चित् समाजसुधारको नेता स्वीय-तान्त्रिकसिद्धिवशात् यथाकथञ्चित् एकं शक्तिशालिनम् प्रेतं स्ववशे चकार।



स एकदा प्रेतम् एवम् उवाच–'शृणु, अहं साम्प्रतं समाजे देशे च प्रथितेन भ्रष्टाचारेण नितान्तम् उद्विग्नः विषण्णश्च भवामि। त्वं तु जानास्येव यदहं महात्मनो गांधिनः शिक्षासु आदर्शेषु च चलितुम् प्रयासं कुर्वाणः समाजस्य राष्ट्रस्य च निरन्तरम् बहुभिर्वर्षैः सेवां करोमि।'

'अस्मत्कृते क आदेशः?' प्रेतात्मा उवाच।

'त्वया तु मम कार्यमेव सम्पादनीयम्। साम्प्रतं, सदाचारः क्षीयते, हत्याकाण्डानि प्रवर्तन्ते, बलात्कारा विधीयन्ते, अभियन्तारः संविदा-(ठेका)

कार्यकर्त्तारश्च सम्मिलिता भूत्वा जनताया धनं लुण्ठन्ति विकास-कार्यं च समापयन्ति। अत एव अहमिच्छामि यत्–समाजे यावन्तोऽपि भ्रष्टाचारिणो वर्त्तन्ते ते सर्वे एकैकं कृत्वा क्रमशः शीघ्रमेव त्वया दण्डनीया विनाशयितव्याश्च।'

'यद् आज्ञापयति भवान्, तथास्तु।' इत्युक्त्वा स प्रेतात्मा सर्वप्रथमं तमेव तान्त्रिकं समाजसुधारकं नेतारं हन्तुकामः सन् स्व-बलिष्ठाभ्यां हस्ताभ्यां तस्य ग्रीवां सम्पीडयितुम् प्रारब्धवान्।

स तान्त्रिकः सुधारकः समुद्विग्नः सन् सहसा सोच्चैः प्रोवाच–'अरे! किमिदं त्वं करोषि?'

'तात! भवतामेव तु आदेशं पालयामि।' इति कथयन् प्रेतस्तं निजघान एव।

•

# प्रभावः

कतिचित् मासपूर्वमेव स ग्रामस्य प्रधानपदे निर्वाचितोऽभवत्। किन्तु निर्वाचने विजयप्राप्त्यर्थम् तेन ग्रामवासिभ्य इदम् आश्वासनम् प्रदत्तम् आसीद् यत् ग्रामात् नगराभिमुखं यः पन्थाः केवलं मृत्तिकानिर्मितः पङ्कसंवलितश्च वर्त्तते स दृढः परिपक्वश्च विधास्यतेऽथ च ग्रामे विद्युतः पानीयस्य च व्यवस्था निश्चितमेव साधु सम्पादयिष्यते।

तस्य मधुरवचसाम् आश्वसनानामेव च परिणाम आसीद् यत् स सरलतया विजयम् अवाप्तवान् ग्रामवासिनश्च तस्य प्रलोभनवचने नितरां विश्वासम् अकुर्वन्।

प्रधानपदे निर्वाचिते सति तस्य गृहे प्रत्यहं जनसमूह आगत्य समस्यानां निराकरणाय बाधितुम् आरब्धवान्। ग्रामीणेभ्यः प्रदत्तानाम् आश्वासनानाम् पूर्त्त्यर्तं स नगरस्य विभिन्नेषु कार्यालयेषु गत्वा प्रयासम् अकरोत्, दलनेतृणाम् उपवेशने सम्मेलने च समयम् अतिवाहितवान्, नानाप्रार्थनापत्राणि प्रस्तावपत्राणि च लिखित्वा विभिन्नविभागेषु प्रेषितवान्। परं समस्यास्तु यथापूर्वम् एव विद्यमाना बभूवुः।

संयोगवशात् तद्दिनेष्वेव मुख्यमन्त्रिमहोदयस्य नगरागमनकार्यक्रमः निश्चितः। तत्र किमपि कृषकसम्मेलनम् आयोजितम् आसीत् यस्य उद्घाटनकार्यं मुख्यमन्त्रिमहोदयेनैव करणीयम् आसीत्। तेषां नगरागमनस्य तिथिरपि निश्चिता अभवत्।

अस्तु, तस्य मस्तिष्के सहसा एको विचारः प्रावर्त्तत। सत्वरमेव स राजधान्याम् प्रस्थितः। तत्र च गत्वा स यथाकञ्चित् मुख्यमन्त्रिमहोदयं मिलित्वा स्वमन्तव्यम्प्रकटितवान्।

ग्रामीणाः श्रीमतः मुख्यमन्त्रिमहोदयस्य नागरिकम् अभिनन्दनं कर्तुम् इच्छन्ति इति ज्ञात्वा मुख्यमन्त्रिमहोदयोऽपि कश्चित् गर्वान्वितः सञ्जातः। स च कथमपि चाटुकारितां कृत्वा नगरस्य कार्यक्रमाद् अनन्तरम् मुख्यमन्त्रिमहोदयानां स्वग्रामे घण्टाद्वयात्मकं अभिनन्दनकार्यक्रमं निश्चित्य तत्र तेषां स्वीकृति-प्राप्तौ च सफलः सञ्जातः।

अथ मुख्यमन्त्रिमहोदयानाम् आगमनम् उपलक्ष्य ग्रामे विधीयमानस्य अभिनन्दनसमारोहस्य सप्तदिनात् पूर्वमेव असौ ग्रामः विद्युत्प्रकाशेन स्नातः सञ्जातः। नगराद् आरभ्य ग्रामपर्यन्तञ्च मृत्तिकानिर्मितः पन्थाः साम्प्रतं

परिपक्व-डामरद्रव्य-परिष्कृतः सञ्जातः। स्वास्थ्यविभागस्य जागरूकताकारणेन च ग्रामे पेयजलव्यवस्थाऽपि सपदि सुन्दररूपेण सम्पादिता।

तत्र ग्रामेऽधुना सर्वत्र प्रसन्नतामयं वातावरणमभवत्। ग्रामप्रधान-महोदयश्चाऽपि कृतकार्यतया प्रसन्नश्चाऽऽसीद् यत् निर्वाचनाऽवसरे तत्प्रदत्तानि समग्राणि समाश्वासन-वचांसि प्रायः सम्पन्नतामेव भजन्ति इति।

•

# आरक्षण-चक्रम्

नवयुवकः प्राध्यापकः पूर्णमनोयोगेन कक्षायाम् पाठयति स्म। तदानीमेव स दृष्टवान् यत् कक्षायामेव एकश्छात्रः निद्रालुर्भूत्वा तन्द्रायते। प्राध्यापकः स तं छात्रं जागरयितुकामः किञ्चिद् उच्चैः प्रोवाच येनाऽसौ विद्यार्थी जृम्भमाणो निद्रां त्यक्तवान्।

'शृणु भो! अस्यां कक्षायां तव तृतीयोऽयं वर्षः। किञ्चिद् अध्ययने-ऽपि ध्यानं कुरुष्व।'

'श्रीमन्! मम चिन्ता न कुरुताम् भवान्। अहन्तु स्वस्मै कस्या अपि आजीविकाया व्यवस्थां करिष्याम्येव। भवान् आत्मनः चिन्तां करोतु। भवांस्तु साम्प्रतमत्र 'अस्थायि' रूपेण नियुक्तो वर्तते।'

विद्यार्थिनस्तदुत्तरमाकर्ण्य स प्राध्यापकः स्तब्धः सन् जडवत् सञ्जातः। किमपि तं छात्रं कथयेत्-ततः पूर्वमेवाऽसौ छात्रः कक्षायाः बहिर्निष्क्रान्तः।

तेन प्राध्यापकेन एम्०एस्-सी० परीक्षा प्रथमश्रेण्याम् उत्तीर्णाऽभूत्। तथा च तस्य स्वाऽध्यापनविषयस्योपरि पूर्णतया अधिकार आसीत्। तस्य इदं सौभाग्यमेव बभूव (दुर्भाग्यं वा?) यत् एम्०एस्-सी० परीक्षोत्तीर्णता-समकालमेव एतस्मिन् महाविद्यालये सः अस्थायिरूपेण प्राध्यापकपदम् प्राप्तवान्।

प्रायः वर्षद्वयं तु तस्याऽध्यापनं कुर्वाणस्य कथञ्चिद् व्यतीतं किन्तु तृतीये वर्षे तस्य महाविद्यालयस्य राजनीतिघटनाचक्रम् एवं भ्रान्तमभूत् यत् स पुनः वृत्तिहीनताम् प्राप्य यत्र-तत्र आजीविका-प्रापणाय प्रार्थनापत्रम् प्रेषयितुम् प्रारेभे।

विगतवर्षद्वयेन स यत्र तत्र सर्वत्र सेवाऽऽवेदनपत्राणि प्रेषयन् साक्षात्कारेषु समुपतिष्ठन् प्राय: व्याकुलः उद्विग्नश्चाऽभवत् किन्तु न कुत्राऽपि सेवाकार्यं लेभे।

अन्ततः स यथाकथञ्चित् एकस्मिन् राजकीये कार्यालये साधारण-लिपिकपदवीम् प्राप्तुं समर्थः सञ्जातः।

अथ अपरेद्युः प्रातरुत्थाय सज्जीभूय स स्वकीययोग्यताम् प्रमाणपत्राणि च उपहसन्निव जीविकावशात् किंकर्त्तव्यविमूढः सन् तस्मिन् एव निम्नलिपिकपदे कार्यं प्रारब्धुं कार्यालये प्राविशत्।

तत्रस्थः कार्यालयाध्यक्षो यदा तस्य नियुक्तिपत्रं दृष्टवान् तदा कार्यभारग्रहणस्य सूचनापत्रं लेखयित्वा तत्र उपजिलाधिकारिणो (S.D.M.) हस्ताक्षरं कारयितुं तम् उवाच।

स च संलग्ने प्रकोष्ठे स्वकीय-कार्यभार-ग्रहणसूचना-पत्रे डिप्टी महोदयस्य हस्ताक्षरं कारयितुं यदा गतवान् अथ च तद्द्वारवस्त्रावरणम् एकतः कृत्वा प्रवेशं कर्त्तुं प्रारब्धवान् तदा प्रवेशसमकालं समुच्चारिताः 'किम् अहम् आगन्तुं शक्नोमि....' इत्यर्धोच्चारिताः शब्दाः तस्य मुखे एव समुपविष्टाः।

तस्य दृष्टिः कदाचित् स्वीयहस्ते विद्यमानस्य पत्रस्योपरि कदाचिच्च समक्षं विद्यमानस्य अधिकारिण; उपरि पतति स्म।

जातीय-आरक्षणमहत्तावशात् तस्य अधिकारिणः आसने उपजिलाधिकारिरूपेण (S.D.M.) स एव तस्य छात्रः समासीन आसीत् यः खलु कक्षायां तेन कदाचिद् भर्त्सित इति।



# द्वे पठनीये पत्रे

सर्वकारस्य कार्यप्रणाली कथं प्रचलति इति ज्ञापयितुकामः अहं सर्वकारद्वारा प्रेषितं पत्रद्वयं भवतां पुरतः प्रस्तौमि यत् पठित्वा मन्ये विद्वांसः पाठकास्तस्य मूल्याङ्कनं विधास्यन्ति।

एतत् पत्रद्वयम् अतीव मनोरञ्जकं वर्त्तते। तत्र प्रथमं पत्रं तु एकं स्वतन्त्रतासेनानीम् अभिलक्ष्य सर्वकारेण प्रेषितम् अस्ति। तस्य सेनान्याः विधवा निरक्षरा धर्मपत्नी पत्रमेतत् मह्यम् पठनाय प्रदत्तवती। द्वितीयं पत्रं च अस्माकमेकः परिचितः सज्जनः आसीत् यः पूर्वं स्वयमेव भारतसर्वकारस्य कस्मिंश्चित् कार्यालये सेवारतः आसीत्, तमेव सम्बोध्य पेंशन-अधिकारिभिः प्रेषितम्। असावपि महानुभावः सम्प्रति दिवंगतः।

## तत्र प्रथमं पत्रं स्वतन्त्रतासेनान्यै सम्बोध्य निम्नं वर्त्तते

माननीय श्रीरामदेव सिंह जी,

विगतदिवसेऽस्माकं कार्यालयस्य कश्चिदधिकारी मां सूचितवान् यद् भवान् एनं नश्वरं संसारम्परित्यज्य दिवं प्रयातः। किन्तु यतोहि अस्माकं राजकीये अभिलेखे (सरकारी रिकार्ड) एवंविधा काचित् लिखिता सूचना न वर्त्तते अत एव अस्माभिरिदमेव समुचितं ज्ञातं यद् अस्मिन्नपि वर्षे पूर्ववत् निमन्त्रणमिदं भवतः सकाशं प्रेषितं स्यात्।

अस्तु, विगतवर्षसदृशः अस्मिन्नपि वर्षे अगस्तमासस्य पञ्चदशे दिनाङ्के स्वतन्त्रतादिवसस्य पवित्रः समारोहः जिलाधिकारिमहोदयस्य कार्यालयस्य समक्षं सोत्साहम् आयोजितो भविष्यति। तत्र भवादृशाणां स्वतन्त्रता-संग्राम-सेनानीनाम् उपस्थितिरत्यन्तम् आवश्यकी वर्त्तते। यतोहि भवन्तः देशं स्वतन्त्रतां प्रापयितुं महान्तं त्यागं कृतवन्तः।

किन्तु यदि भवान् अस्मिन् समारोहे सम्मिलितं भवितुं न पारयते अर्थात् भवान् वस्तुतः एनम् असारं संसारम्परित्यज्य दिवंगतो वर्त्तते तदा कृपया एतदाशय-समन्वितम्पत्रमेकम् अवश्यमस्मिन् कार्यालये प्रेषयतु येन वयं स्वकीयम् अभिलेखं तदनुसारमेव कर्त्तुं प्रभवेम।

सूचनार्थं चैतद् निवेद्यते यत् सर्वकारस्य कस्मिंश्चिदपि कार्यालये स्वतन्त्रतासेनानीतोऽप्यधिकं महत्त्वं तत्रस्थस्याऽभिलेखस्य (रिकार्डस्य) भवति।

एका चाऽपरा प्रार्थना–स्वकीयमृत्योर्यत् प्रमाणपत्रं प्रेषयतु तत्र नगरपालिकाया आयुक्तस्य (म्युनिसिपल कमिश्नर) ग्राम-प्रधानस्य वा हस्ताक्षरम् आवश्यकं भविष्यति।

इंचार्ज सुपरिन्टेण्डेण्ट — भवदीयः

पत्र सूचना ब्यूरो, भारत सरकार — एस०एन० चटर्जी

## अथ द्वितीयं पत्रम् सेवानिवृत्तिधन (पेंशन) सम्बन्धि

प्रिय श्री रञ्जन तिवारी जी,

विगतषण्मासेभ्यो भवान् स्वकीयं सेवानिवृत्तिधनं (पेंशन) ग्रहीतुमिह कार्यालये न समागच्छति। अत्रेदं स्मरणीयं यत् अत्रत्यनियमानुसारम् इयमपि अनियमितता वर्त्तते। विभागः कथमपि इदं सोढुं न क्षमः। एतस्योत्तरदायित्वं भवदुपरि वर्तते।

अस्तु, षण्मासपूर्वमेव अस्माभिरेकं पत्रमपि प्राप्तमासीत्। तस्मिन् पत्रे च इदं सूचितमभवद् यत् श्री रञ्जन तिवारीमहोदयः संसारमिमम् असारं परित्यज्य स्वर्गं गतवान् अत एव तस्य नामधेयं सेवानिवृत्ति-पञ्जीकरणलेखात् (पेंशन रजिस्टर से) पृथक् करोतु। किन्तु कथमेतद् अस्माभिः कर्त्तुं शक्यते? तस्मिन् पत्रे वयं विश्वासं न कुर्महे। वयं तु मृत्युप्रमाण-पत्रम् अपेक्षामहे। तद् विना रजिस्टरपत्रात् नामाऽपनयनं विधिविरुद्धं भविष्यति।

यतोहि प्रमाणाभावात् पूर्वसूचनाऽभावाच्च भवतां सेवाधनं (पेंशन) अत्र कार्यालये षण्मासात् निरुद्धं वर्तते अत एव अस्माकं लेखापत्रेषु (एकाउण्ट रजिस्टर में) अस्त-व्यस्तता भवति, लेखानिरीक्षकाश्च आपत्तिं प्रकटयन्ति। अतः वयं भवतां सन्निधौ षण्मासस्य सेवाधनं (पेंशन) चेक द्वारा प्रेषयामः। एतस्मिन् चेकपत्रे चाऽस्माभिः तद्धनं न्यूनीकृतं यत् सेवानिवृत्तिधनस्य समयानुसारम् अग्रहणस्यापराधे भवतो ग्रहीतव्यम् आसीत्।

वयं सेवानिवृत्तिधन-प्रापकाणां मनुष्याणां सूचीपत्रात् पञ्जीकरणपत्राद् वा तदैव भवतो नामधेयम् अपनेष्यामो यदा इदं चेकपत्रम् एवंविधा-ऽनुमोदनपुरःसरं प्रत्यावर्तिष्यते यत् श्रीरञ्जनतिवारी संसारमेनम्परित्यज्य तत्र गतः यत्र सेवानिवृत्तिधनस्य (पेंशन) आवश्यकता न भवति।

अस्तु, कृपया यदाऽपि भविष्यत्काले एवंविधा अवस्था भवेत् तदा पूर्वतः एव सूचनादानम् आवश्यकं वर्त्तते।

इंचार्ज सुपरिण्टेण्डेण्ट — भवदीयः
द्वारा पेंशन प्राप्तकर्त्ता, भारत सरकार — रामसिंह चौहान

•

# पुत्रम्प्रति पितुरेकम् अनावृतम्पत्रम्

प्रिय पुत्र,

तुभ्यं सहस्रम् आशीर्वचनानि!

साम्प्रतं तव शिक्षा सम्पूर्णा। प्रतियोगिपरीक्षायां च त्वं सफलः सञ्जातः इति श्रुत्वा मम चेतसि महान् आनन्दः समागतः। इतः परं त्वया जीवने वास्तविकः संघर्षः प्रारम्भणीयो वर्तते।

परम्परानुसारम् अहम् आयुषा ज्येष्ठोऽस्मि, बहुश्रुतोऽस्मि, बहुयायावरः, बहुभिः सामीप्येन संगतः नानारहस्यमर्मज्ञश्च भवामि। अत एव यत् किमपि जीवने दृष्टवान्, कृतवान् प्राप्तवांश्च तत् सर्वं तुभ्यम् अस्मिन् पत्रे यथासंभवं क्रमशः निर्दिशामि येन त्वमपि जीवने ममाऽनुभवलाभेन प्रेरितः सन् यथाशक्यं शिक्षाम्प्राप्य सुखी भविष्यसि।

(१) एतत् त्वयि निर्भरो वर्त्तते यत् त्वं बहुविद्यासम्पन्नः सन् नवरत्नपदवीं प्राप्नोषि अथवा आत्मानम् अल्पविद्यम् अशिक्षितं वा मन्यमानः राजाधिराज-अकबर-बादशाह इव भारतस्य साम्राज्यं प्राप्नोषि। अर्थात् अशिक्षिता मूर्खाश्च राजपदवीं प्राप्नुवन्ति विद्वांसो विद्यावन्तश्च नवरत्नपदवीमवाप्य तस्य (राज्ञः) चाटुकारितायां नियुक्ता भवन्ति। यदाऽपि समयो मिलेत् एतत् चिरन्तनम् ऐतिहासिकं च सत्यं त्वया नित्यं चिन्तनीयमेव। साम्प्रतमपि इयमेव स्थितिः वर्त्तते यथा पञ्चशत-वर्षपूर्वा आसीत्। मन्ये भविष्यत्कालेऽपि एतस्मिन् कटुसत्ये प्रहारो न भविता।

(२) त्वया वस्त्राणि सदैव उत्तमानि बहुमूल्यानि च परिधातव्यानि। तवाऽन्तरात्मानं ज्ञातुं कस्याऽपि पार्श्वे समयो न वर्त्तते। साम्प्रतं जनाः पुस्तकावरणं वीक्ष्य पुस्तकानि क्रीणन्ति। एकदा च क्रीत्वा ते तत्पुस्तकं कदापि न पठन्ति न च ज्ञातुमिच्छन्ति यत् तस्मिन् पुस्तके किं लिखितं वर्त्तते। तथैव त्वामपि जनाः बहिरावरणादेव वीक्ष्य तव मूल्यज्ञानं करिष्यन्ति। अत एव तत्र त्वया सावधानेन भाव्यम्।

(३) स्ववैयक्तिक-सहायकस्य पदे सदैव त्वया काचित् विलाससम्पन्ना सुन्दरी बाला एव नियोक्तव्या। एवं करणेन त्वं परमं सुखं प्राप्स्यसि बहूनि कठिनानि च तव कार्याणि स्वत एव सिद्धितां गमिष्यन्ति। उर्वशी-मेनका-तिलोत्तमा-प्रभृतयः साम्प्रतमपि जीवन्ति–इत्येव मम तृतीया शिक्षा। एतस्याः पूर्णो लाभो ग्रहीतव्यः।

(४) जन-प्रतिनिधीनां पत्रकाराणां च सदैव समादरः कर्त्तव्यः। ये नेतारः

पत्रकाराश्च चरित्रहीना वर्त्तन्ते तैः समम् अतिरिक्ताऽऽदरेण वर्त्तितव्यम्। सङ्कटकाले तु तथाविधा एव तवाऽधिकं साहाय्यं करिष्यन्ति इति ममाऽनुभूता शिक्षा न विस्मरणीया।

(५) स्वकार्यालयीय-कर्मचारिसङ्घानां पदाधिकारिभिः सार्धं सम्मानपूर्वकमेव वर्त्तितव्यम्। स्टाफकार्यालये यदि कश्चित् हरिजनः अनुसूचित-जातियुक्तो वा स्यात्तदा स पितुरप्यधिकः सम्माननीयः। एतदत्र चावश्यं ध्यातव्यं यत् त्वद्विरुद्धः कश्चिदभियोगः नियमानुसारप्रेषणेन तु बहुकालाऽनन्तरमग्रसारितं भविष्यति किन्तु कर्मचारिसङ्घस्य नेतारः मुख्यमन्त्रिभिः समं तत्क्षणमेव मिलित्वा तदभियोगं कथयिष्यन्ति। अत एव इमे यूनियन-नेतारः सदैव तोषणीया एव।

(६) यदा कदाचिदपि निरीक्षणकार्येषु गन्तव्यं भवेत् तदा काभिश्चित् सुन्दरीभिः समं सम्पर्कः करणीय एव। सुन्दरवस्तूनाम् उपेक्षया भगवतो निरादरं भवति।

(७) स्वज्येष्ठाधिकारिभिः समं सदैव तेषां यथारुचि वर्तितव्यम्। एतेषां रुचिविषये सुराः सुन्दर्यश्च प्रमुखाः भवन्तीति न विस्मर्त्तव्यम्। ज्येष्ठाऽधिकारिणां भार्याः स्वसारश्च विशेषेण ध्यातव्याः। एतासाम् इच्छानां तिरस्कारो न कर्त्तव्यः। ताः सर्वविधं सन्तोषणीयाएव।

(८) यदि कश्चित् श्रद्धालुर्भद्रपुरुषस्तुभ्यम् आभूषणं, वित्तं, स्वर्ण-बिस्कुटादिकं हीरकं वा समर्पयेत् तदा तत्सर्वं कदापि न तिरस्कर्त्तव्यम्। गृहे समागताया लक्ष्म्याः स्वागतम् आदरप्रदानं वा अस्माकं प्राचीना पद्धतिरिति त्वया न विस्मर्त्तव्यम्।

(९) पार्श्वे समागते कस्मिंश्चिदपि विवादास्पद-फाइलपत्रे कदापि निर्णयो न कर्त्तव्यः। यदि कदाचित् निर्णयदानमावश्यकमेव भवेत् तदा तत्र स्वकीयं हस्ताक्षरं न कर्त्तव्यम्। यतोहि यः कश्चिद् हस्ताक्षरं कुरुते स एव पश्चाद् उत्तरदायित्वेन निगृहीतो भवति।

(१०) दरिद्रैः समं साधुभावेन न व्यवहरणीयम्। तेषां कदापि सहायता चापि न कर्त्तव्या। ये खलु स्वयम् ईश्वरेणैव निर्धना अकिञ्चनाश्च निर्मितास्तेषां निर्धनतां नाशयितुं मानवस्य अधिकार: कथं प्रभवति?

(११) स्वकीयं वेतनं बैङ्कात् कदापि नैव निःसारणीयम्। तव वास्तविकम् आयधनं तु तदेव वर्त्तते यद् उपरिष्टात् प्राप्यते। यदि कदाचित् कापि विपन्ना विधवाऽपि स्वपत्युर्भविष्य-निधि-धनं नेतुं समागच्छेत् तदापि त्वया

स्वकमीशन-धनं तु नैव त्यक्तव्यम् (किन्तु यदि सा विधवा युवती रूपवती च स्यात् तदा तत्र शक्यते विचारयितुं यथोचितं च व्यवहर्त्तुम्)।

(१२) स्वकीये कार्यालये विभागे वा प्रान्तवादः, जातिवादः, वर्गवादश्च प्रथयितव्य एव। भारतीयत्वेन किमपि नाधिगन्तुं शक्यते देशेऽस्मिन्! पश्य सम्प्रति गुजरातिनः, मराठिनः, बंगालिनः, पंजाबिनः, दाक्षिणात्या एव वा लाभं प्राप्नुवन्ति। उत्तर-प्रदेशीया उत्तर-भारतीया वा आत्मानं भारतीयं मत्वा भारतीयत्वं वा दर्शयित्वा किम्प्राप्तवन्तः?

(१३) गृहे वैष्णवेन सताऽपि त्वया बहिर्गत्वा सदैव आत्मना वामपन्थिना प्रगतिवादिना च भवितव्यम्। प्रगतिवादिता-प्रदर्शने च–

मद्यं मांसं च मीनं च मुद्रा मैथुनमेव च।
एते पञ्च मकाराः स्यु र्मोक्षदा हि युगे युगे।।

इति प्राचीन-शास्त्रवचनं न विस्मरणीयम्। साम्प्रतं वस्तुतः वाममार्गिण एव वामपन्थिनः प्रगतिवादिनश्चेति विचार्य सर्वं सेवनीयम्।

(१४) मम अन्तिमा महत्त्वपूर्णा चेयं शिक्षा वर्त्तते यत् तव समीपे कियन्त्यपि बहुमूल्यानि सुन्दराणि विदेश-निर्मितानि वा वस्त्राणि भवेयुः किन्तु खादीनिर्मितम् एकं परिधानम् अवश्यं रक्षणीयम्। तत् खादीवस्त्रं च गांधी-आश्रमादेव क्रेतव्यम्। सङ्कटकाले इदमेव परिधानं तव रक्षां बहुधा करिष्यतीति मम पूर्णो विश्वासः।

किमधिकेन? 'महाजनो येन गतः स पन्थाः' इत्यवलम्ब्य यदि मत्प्रदत्त-शिक्षासु ध्यानं दास्यसि तदा ध्रुवमेव जीवने सफलो भविष्यसि। पितृत्वेन मया स्वकर्त्तव्यमत्र निर्वाहितम्। इतः परं तव भाग्यं परिश्रमश्च। शुभास्ते पन्थानः इति।।

●

# अस्माकं स्वाभिमानस्य चत्वारः प्रमुखस्तम्भाः

भारतसर्वकारस्य नवीनशिक्षा-नीतिमनुचिन्त्य तदनुसारमेव मया देशस्य स्वाभिमानवर्धकानां चतुर्णां विशिष्टस्तम्भानामुपरि एकैकः संक्षिप्तनिबन्धः उदाहरण-रूपेण लिखितः। विभिन्न-सामयिकविषयान् अधिकृत्य प्रायः संक्षिप्ता एव किन्तु वास्तविकतापूर्णा इमे चत्वारो निबन्धा भवतां पुरस्ताद् एतन्निमित्तं प्रस्तूयन्ते यद् भवन्तः सर्वे प्राज्ञा इमान् अभिनवनिबन्धान् नवीनशिक्षा-पाठ्यक्रमे समावेशयितुं सर्वकारस्य शिक्षामन्त्रालयं शिक्षानिदेशकं च पत्रं प्रेषयिष्यन्ति।

तथा च भवतां बाल-गोपाला अपि एतान् आदर्शरूपान् नवनिबन्धान् याथातथ्यतः समधीत्य स्वकीयज्ञानवर्धनं कृत्वा निश्चितमेव लाभान्विता भविष्यन्तीति।

## (१) अस्माकं विद्यालयः

अस्माकं विद्यालयः अस्माकं नगरस्य शोभा वर्त्तते। तत्र वयं निःसन्देहं महान्तं स्वाभिमानं अनुभवामः।

अस्माकं विद्यालयस्य भित्तिका अतिजीर्णाः सन्ति। ताः प्राचीन-भारतीय-पुरातत्त्व-विभागस्य स्वत एव स्मारणं कारयन्ति। भित्तिकानामुपरि प्रावरणं (छत) न भवति। अत एव शीतकाले, वर्षासमये, ग्रीष्मकाले च अत्रत्यं वातावरणं स्वाभाविकम् मनोहरम् अकृत्रिमं च भवति। अस्माकं विद्यालये चत्वारः अध्यापकाश्चतस्रः अध्यापिकाश्च वर्त्तन्ते। एकः प्रधानाचार्योऽपि वर्त्तते यः प्रायः विद्यालये नैव समागच्छति। स प्रधानाचार्यो विद्यालयस्याऽनतिदूरे स्वक्षेत्रेषु कृषिकर्माणि कारयितुं निरतो दृश्यते।

प्रधानाचार्यः प्रतिदिनं केवलम् एकघण्टापर्यन्तमेव विद्यालये उपविशति। यदि हस्ताक्षरस्य आवश्यकता न भवेत् तदा स विद्यालयेऽपि न आगच्छेत्। एवंविधस्य प्रधानाचार्यस्य उपरि वयं गर्वमनुभवामः।

कक्षायां सर्वे शिक्षकाः प्रायः प्रतिदिनमेव प्रतिछात्रात् रूप्यकद्वयं चन्दारूपेण प्रायः संगृह्य जलपानस्य प्रबन्धं कुर्वन्ति। तत एव ते कदाचित् छात्रेभ्योऽपि प्रसादरूपेण प्रददति।

परीक्षासमये शिक्षका अस्माकम् अनुकरणकार्येषु सहयोगं कुर्वन्ति। ते गुरुदक्षिणाम्प्राप्य अस्मान् उत्तीर्णताम्प्रापयन्ति केचिद् गुरवो गृहशिक्षणम् (ट्यूशन) अपि कुर्वन्ति।

अस्माकं विद्यालयस्य प्रधानाचार्यो विधुरो वर्त्तते। विद्यालयस्य एकया अविवाहिताऽध्यपिकया सह तस्य रूस-भारतवत् सुदृढः सम्बन्धो वर्त्तते।

तावुभावपि कदाचित् सहैव जलपानादिकं कुरुतः।

विद्यालयस्य वस्तूनि प्रधानाचार्यमहोदयस्य गृहस्य शोभां वर्धयन्ति। सर्वकारेण विद्यालयाय एकमभिनवं दूरदर्शनयन्त्रं समुपहृतम्। तद्दूरदर्शनमपि साम्प्रतं प्रधानाचार्यस्य गृहे स्थापितम्। एवम् अस्माकं विद्यालयो भारतवर्षस्य आदर्श-विद्यालयो वर्त्तते। वयं तत्र स्वाभिमानमनुभवामः।

## (२) समाचार-पत्रम्

वयम्प्रतिदिनं प्रातरुत्थाय नित्यकर्मादिकं सम्पाद्य देश-विदेशस्य नवीनघटना-ज्ञानाय समाचारपत्रम् पठामः। किन्तु सुखमेतद् यद् वयं समाचारपत्रं क्रीत्वा न पठामः। यावत् पर्यन्तम् अस्माकं प्रतिवेशी जीवितो वर्त्तते तावत् पर्यन्तं समाचारपत्रक्रयणे धनव्ययस्य आवश्यकताऽपि नास्ति। अस्माकं प्रतिवेशी सज्जनो वर्त्तते। स अयाचितेऽपि पूर्वं स्वयं पठित्वा पुनः अस्मभ्यं समाचारपत्रं पठनार्थं प्रेषयति। स जानाति यद् वयं तस्यैव समाचारपत्रं नीत्वा पठिष्यामः।

समाचारपत्र-पठनेन अस्माकं ज्ञानं वर्धते। तेनैव वयं जानीमो यद् अस्माकं नगरे क्व चौर्यम् अभवत्, क्व छुरिकाप्रहारः, क्व बलात्कारः सम्पन्नः, कुत्र च आकस्मिकं निरीक्षणं (छापा) सञ्जातम्। एतत् सर्वं ज्ञानं वयं प्रतिवेशिनः कृपया निःशुल्कं प्राप्य प्रसन्ना भवामः।

समाचारपत्रं सुखदुःखयोरस्माकं सहभागी भवति। समाचारपत्रेषु साम्प्रतं समाचारा अल्पीयांसः किन्तु विज्ञापनानि अधिकानि भवन्ति। यद्यपि वयं विज्ञापनानां माध्यमेन नानाविधं ज्ञानं प्राप्नुमः। विज्ञापनेनैव वयं जानीमो यत् सिगरेटपानम् आकर्षकव्यक्तित्वस्य प्रदर्शनाय पौरुषप्रत्यायनाय च अत्यावश्यकमस्ति। 'टाइगर' चायपानं च पुरुषसिंहानां कृते अनिवार्यं पेयम्भवति। विज्ञापनेनैव ज्ञायते यद् अभिनेत्री श्रीदेवी, रेखा वा केन फेनिलेन स्नानं करोति, क्रिकेट-क्रीडकः सुनीलगावस्करः स्वशिरोरुहान् श्यामान् कर्त्तुं किम् औषधं प्रयुनक्ति। तथैव जयाप्रदायाः केशवर्धकं किं तैलम् अस्ति। तात्पर्यमेतत् यत् साम्प्रतं विज्ञापनेभ्य एव सौन्दर्यशास्त्रस्य शिक्षणं प्राप्तुं शक्यते।

समाचारपत्रेणैव विद्यार्थिभिर्ज्ञायते यत् कस्मिन् चित्रालये कस्य चलचित्रस्य प्रदर्शनमायोजितं वर्त्तते। तदनुसारमेव ते विद्यालयब्याजेन गृहान्निःसृत्य मित्रैः समं चलचित्रदर्शनं कुर्वन्ति।

महिलास्तु समाचारपत्रेणैव जानन्ति यत् नगरस्य कस्मिन् भागे शाटिकानाम् अल्पमूल्यता (SALE) प्रचलति। अल्पमूल्यता-लोभ-वशादेव ताः अपव्ययं कुर्वन्ति किन्तु तत्र निमित्तानि तु समाचारपत्रस्य विज्ञापनान्येव

भवन्ति। अत एव केचित् कथयन्ति यत् समाचारपत्र-पठनेन हानयोऽपि भवन्ति। तदस्माभिर्हानिम्परित्यज्य लाभो ग्रहीतव्यः।

## (३) पत्रवितरकः (पोस्टमैन)

पत्रवितरकः भारत-सर्वकारस्य जनप्रियः सेवको भवति। तस्य पार्श्वे एका द्विचक्रिका पत्राणां झोलकं च भवति। अस्माकम् आवासक्षेत्रे (मोहल्लायाम्) अपि एकः पत्रवितरको वर्त्तते यस्य नामधेयं प्यारेलाल इति वर्त्तते।

प्यारेलालाय प्रेमपत्राणां पठनं रोचते। सः अस्माकं मोहल्लायाम् आगतानाम्प्रेम-पत्राणां सावधानतया उद्घाटनं कृत्वा एकान्ते च पठित्वा तदनन्तरं स निपुणतया पुनः संश्लेष्यति। प्रेम-पत्रप्रदानात् पूर्वं स तद्द्वारा भयादोहनं (ब्लैकमेल) कुर्वाणः पर्याप्तं धनं प्राप्नोति।

अस्माकं पत्रवितरकः प्रत्येकस्माद् धनादेशात् (मनीआर्डर) पञ्चप्रतिशतं स्वकीयं वितरणभागं (लाभांशं वा) बलात् प्रतिगृह्णाति। ये तथाविधं तस्य भागं न प्रयच्छन्ति तान् स 'अस्तु, पुनः द्रक्ष्यामि' इति कथयित्वा....।

प्यारेलालस्तु एतद्दुःखेन पीडितो वर्त्तते यत् स विगतदशवर्षेभ्यः प्रेमपत्राणां नानानरेभ्यो वितरणं कुर्वन्नास्ते किन्तु काचिदपि कन्या तस्मै पत्रं न लिखति। पुनरपि स 'दीपकतलेऽन्धकारः' इत्याभाणकम् अनुध्याय समाश्वस्तताम् अनुभवति। प्यारेलालो मोहल्लावासिनीभिः महिलाभिः समं सद्भावनासम्पन्ने वातावरणे संगन्तुं विश्वसिति।

पत्रवितरकस्य श्री प्यारेलालस्य कृपा मयि काचिदधिकैव वर्त्तते। अत एव यदाप्यसौ पत्रादिकं दातुमस्माकं गृहे समागच्छति तदा मदनुमतिं विनैव मम फ्रिजयन्त्राद् यथेच्छं जलं मिष्ठान्नादिकं च नीत्वा पातुं प्रवर्त्तते। मम लेखनी चापि यदा तस्य हस्ते कदाचित् निपतति तदा तत्रैव निलीना भवति।

नानादेशात् समागता विभिन्नाः पत्र-पत्रिकादिकाः प्यारेलालस्य गृहस्य शोभां वर्धयन्ते। तस्य बालकाः पत्रिकादीनां चित्राणि यथेच्छं निःसार्य भित्तिकादिषु कपाटेषु वा संश्लेषयन्ते। एकदा तु इन्धनाऽभावे तस्य पत्नी भोजनमपि पत्र-पत्रिकादीन् ज्वालयित्वा महानसे सम्पादितवती। एवंविधस्य जनसेवकस्योपरि वयं स्वाभिमानं कर्त्तुं शक्नुमहे।

## (४) समाजसेवी नेता

अस्माकं मोहल्लायामेकः प्रसिद्धः समाजसेवको नेता वर्त्तते। अस्य नामधेयं श्री देवदत्त इत्यस्ति। बाल्यकाले देवदत्तो मयैव सह विद्यालये विद्याध्ययनाय प्रविष्ट आसीत्। अहन्तु विद्यालयात् महाविद्यालये महाविद्यालयात् विश्वविद्यालये च अध्ययनं कुर्वाणो महता प्रयत्नेन परिश्रमेण

च उच्चशिक्षाम्प्राप्य एकस्मिन् महाविद्यालये सेवाकार्यम्प्राप्तवान् किन्तु श्रीदेवदत्तः विद्यालयम्परित्यज्य अपूर्णामेव शिक्षां गृहीत्वा देशसेवां कर्त्तुं राजनीतौ प्रविष्टवान्। पूर्वं तु स यथाकथञ्चित् नगरपालिकायाः सदस्यताम् अधिगतवान् तदनन्तरं विधायकपदे निर्वाचितो भूत्वा प्रदेशमन्त्रिमण्डलस्य शोभां वर्धयितुकामः साम्प्रतं हाईकमानकृपया शिक्षामन्त्रिपदे नियुक्तः सञ्जातः। वयं नगरवासिनो श्रीदेवदत्तस्योपरि विशिष्टं स्वाभिमानमनुभवामः।

देवदत्तस्य महत्त्वाकाङ्क्षा मुख्यमन्त्रिपदस्य वर्त्तते। स निश्चितमेव कदाचित् सफलतां प्राप्स्यति। तस्य सफलतायाः रहस्यं सर्वे जानन्ति। यदा स नगरपार्षदरूपेण प्रथमवारं निर्वाचित आसीत् तदा तस्य वित्तीया स्थितिः प्रदेश-सर्वकारस्यार्थिकस्थितिरिव महती शोचनीया बभूव किन्तु साम्प्रतं तस्य परिवारस्य प्रतिव्यक्तिः आयुवृद्धिः निःसीमाऽऽकाशवद् वर्धतेतमाम्।

श्रीदेवदत्तः पूर्वं नाम्ना आकृत्या च मां परिचिनोति स्म किन्तु विधायकपदे निर्वाचनाऽनन्तरं स मम नामधेयं विस्मृतवान्। मन्त्रिपदं च प्राप्य स मम मुखाकृतिमपि स्वभूतकालमिव विस्मृतवान्। सम्प्रति तेषां गृहे राज्यसर्वकारस्य लाटरीविभाग इव सर्वतो धनवृष्टिर्जायते। अहं तस्य मुख्यमन्त्रिपद-प्राप्तये भगवन्तं भूतनाथम्प्रार्थयामि।



# आय-वृद्धिः

वार्धक्यवशात् दौर्बल्यकारणाच्च आपणिको रामदेवः स्वव्यापारवृद्धौ अक्षमः सञ्जातः। शनैः शनैः आपणस्य वस्तूनि समाप्तिं गच्छन्ति स्म धनमपि च क्षीयते स्म। स च तथाविधः अशक्तो भवति स्म यत् तुलायाम् अधिकभारयुक्तानि वस्तून्यपि तोलयितुम् असमर्थो जायते। तदेवं तस्य व्यापारकार्यं शनैः शनैः समाप्तिम् अभिप्रावर्त्तत जीविकायै च स रोटिकाद्वयमपि प्राप्तुं कष्टायते स्म।



अन्ततः पराजितो भूत्वा स स्वकीयाम् अष्टादशवर्षदेशीयां युवतीं कन्यां स्वव्यापार-कर्मणि साहाय्यार्थम् आपणे उपवेशयितुम् आरब्धवान्।

सप्ताहाऽनन्तरं तेनाऽनुभूतं यत् तस्य आपणे विक्रयवृद्धिस्तथा सञ्जाता, एकस्मिन्नेव दिवसे च तावान् लाभः प्रवृत्तो यावान् लाभः पुरा एकस्मिन् मासे भवति स्म।

आयवृद्धिवशादेव च तस्य परिवारः साम्प्रतं न कष्टायते।

धन्या जनताया मनोवृत्तिः।

•

# गृहस्य सङ्केतज्ञानम्

अहं श्रीविद्याकान्तमहोदयं सङ्गन्तुम् ऐच्छम्। सम्प्रति रात्रौ दशवादनमभूत् किन्तु तत्रैवंविधम् आवश्यकं कार्यमभवत् यद् एतस्यां निशायामपि तेषां गृहे गमनम् आवश्यकम् आसीत्। परन्तु काठिन्यमिदं यदहं तस्य गृहस्य सङ्केतं न अजानम्। अस्माकम् एकः सखा बभूव यम् अहं श्रीविद्याकान्तस्य गृहसङ्केतम् पृष्ट्वान्। स उवाच 'इतः भवान् जवाहरनगरं गच्छतु, तत्र चतुष्पथस्य वामहस्ते एकं बैङ्कं भविष्यति, तस्य बैङ्कस्य पार्श्वतश्च यो लघुपन्थाः प्रयाति तत्रैव किञ्चिद् अग्रे गच्छन् भवान् एकम् औषधालयं प्राप्स्यति, औषधालयस्य समन्तादेव विद्याकान्तस्य गृहं वर्तते।'

तत् सङ्केतकथनमाकर्ण्य मया चतुष्पथे स्थितं बैङ्कम्, औषधालयं, श्रीविद्याकान्तस्य गृहम्–इत्येतत् त्रयमपि हृदयङ्गमं कृत्वा जवाहरनगरं प्रस्थितम्। जवाहरनगरस्य चतुष्पथं च प्राप्य तत्र गच्छन्तम् एकं पथिकम् पृष्टवान्–

'अयि भ्रातः! अत्रैव कुत्रचित् चतुष्पथस्य वामहस्ते यद् एकं बैङ्कभवनम् अस्ति तत् क्व विराजते?'

स पथिकस्तदानीम् मां किञ्चित् सन्दिग्धनयनाभ्याम् पश्यन् प्रोवाच– 'अस्य चतुष्पथस्य वामहस्ते तु त्रीणि बैङ्कभवनानि वर्तन्ते, किन्तु अहं भवन्तं सावधानं कर्त्तुमिच्छामि यत् तत्र त्रिष्वपि भवनेषु साम्प्रतं सशस्त्राः, रक्षापुरुषा विचरन्ति। अधुना स्वकीयां योजनां कदाचिद् अन्यस्मिन् समये एव चरितार्थं करोतु। पुनश्च भवान् हृष्टः-पुष्टः स्वस्थश्च पुरुषो वर्त्तते। परिश्रमं कृत्वा कथं न जीविकाम् पालयति?'

तस्य तद्वाक्यम् आकर्ण्य मयाऽनुभूतं यत् सम्प्रतं बैङ्कस्य नैव, अपितु मम चरित्रस्य प्रश्नः समक्षम् उपस्थितो वर्त्तते। अत एव तत्र निराकर्त्तुमिच्छुः अहं तम् प्रोवाच–'श्रीमन्! मन्ये भवान् किञ्चिद् भ्रान्तः सञ्जातः। अहम् एकः प्राध्यापको वर्ते। मम सज्जनपुरुषस्य तद्बैङ्कभवनेन किम्प्रयोजनम्? अहन्तु वस्तुतः बैङ्कभवनस्य समीपस्थितं लघुपन्थानं मार्गयामि यत्र प्रचलन्नहम् औषधालयम्प्राप्य तत्समक्षे स्थितं श्रीविद्याकान्त.....।'

ममैतद् वचनमाकर्ण्य स पथिक उवाच–'महोदय! मम किम्प्रयोजनम् औषधालयस्य? अहन्तु पारिवारिको मल्लो वर्ते। यदि भवान् औषधालयमेव गन्तुमिच्छति तदा अत्रैव भवान् किमप्येवं सु(कु) कार्यं करोतु येन भवन्तम् अत्रस्था जना औषधालयं प्रापयन्तु।' एवम् उक्त्वा स पथिकः प्रस्थितः।

तच्छ्रुत्वा मम शरीरम् अग्निदग्धमिव सञ्जातम्। किन्तु तत्र निशायां किं कर्त्तुम् अशक्नोम्? अस्तु, चतुष्पथस्य वामहस्ते किञ्चिद् दूरं गत्वा मया एकं बैङ्कभवनं दृष्टम्। तद् विलोक्याऽहं तथा प्रसन्नोऽभवं यथा कश्चित् पुत्रोत्सवेऽपि न हृष्यति। तत्रैवाग्रे कश्चिदौषधालय आसीत् तस्य चौषधालयस्य समक्षस्थितं यद गृहम् आसीत् तत्र गत्वा यदाऽहं खटखटायाञ्चकार तदा कोऽपि चक्षूंषि परिमृजन् आगत्य द्वारम् उद्घाटयामास।

"किं श्रीविद्याकान्तमहोदयोऽत्रैव निवसति" इति च मया पृष्टे स पुरुषः क्षुब्धः सन् उवाच यद्–"योऽत्र निवसति न स विद्याकान्तः, यस्तु कश्चिद् विद्याकान्तः स तु नाऽत्र वसति" इत्युक्त्वा स झटित्येव द्वारम् आवृतम् अकरोत्।

मया विचारितं यत् सम्भवतः अहं कस्यचिदन्यस्य औषधालयस्य समक्षम् आगतः। अत एव एकमन्यम्पथिकम्पप्रच्छ–"भ्रातः! किम् अस्मिन् स्थाने कश्चनाऽन्योऽपि औषधालयो वर्तते?"

इति पृच्छत्येव मयि स पथिकः मम हस्तस्य नाडिकाया उपरि अंगुलिं कृत्वा मम नाडिकास्पन्दनं द्रष्टुमारब्धवान्। तदनन्तरम् असौ "बन्धो! अहं तु स्वयमेव चिकित्सको वर्त्ते, भवान् कुत्र औषधालयस्य चक्रे परिक्रामति?" इत्युक्त्वा स मां जिह्वां दर्शयितुम् आदिश्य कथयति–"अहन्तु गुप्तरोगानपि चिकित्सितुं क्षमः........।"

अहं शीघ्रमेव तस्य हस्तात् स्वहस्तम् अपसार्य उक्तवान्–'अरे डॉक्टर महोदय! कृपया मम वर्त्तां श्रृणुताम्, नाहम्, अस्वस्थः सन् औषधालयम् मार्गयामि अपितु तादृशम् औषधालयम् मार्गयामि यस्य समक्षं मम मित्रस्य श्रीविद्याकान्तस्य गृहम् भवेत्।'

इति कथयत्येव मयि स चिकित्सकः प्रायो मूर्च्छितो भवन् उक्तवान्–"महोदय! अस्याम् मोहल्लायाम् एतावन्तः औषधालया वर्तन्ते यत् अत्र न खलु व्याधिग्रस्ता औषधालयम् मार्गयन्ति, अपितु चिकित्सका एव रोगिणम् अन्वेषयन्ति।" इत्युक्त्वा स न जाने क्व प्रस्थितः।

सम्प्रति रात्रौ द्वादश-वादनादप्यधिकः समयो बभूव। अहं बैङ्कभवनानां, औषधालयानाम्, विद्याकान्तानाञ्च मार्गणं सरलं नाऽस्ति इति विचार्य निराशः सन् गृहम् प्रस्थितः।

एतद्घटनाऽनन्तरम् अहम् एतत्परिणामम् प्राप्तवान् यत् कस्याऽपि सङ्केतप्रदानं, सङ्केतस्य च पूर्णतया ज्ञानम् अथ च तदनुसारं गृहस्याऽन्वेषणं सरलं सुकरं च नैव भवति।

अहं स्मरामि यत् पुरा अस्माकमेव मोहल्लायाम् एके आचार्यमहोदया निवसन्ति स्म। यदैव तान् कश्चित् तेषां गृहस्य सङ्केतम्पृच्छति स्म तदा ते तं कथयन्ति स्म यत् "अरे! अस्माकं गृहस्य सङ्केतस्तु अतिसरलो वर्त्तते। भवान् एवं करोतु यत् मोहल्लायाम् आगत्य पुलिसथानास्थानम्पृच्छतु। पुलिसस्थानाच्च यः पन्थाः अवक्रो गच्छति तत्र गत्वा किञ्चिदग्रे एकः विशालः निम्बवृक्षो विराजते। तस्य वृक्षस्यैव अधस्तात् तत्र दश-द्वादश बालकाः परिक्रीडमाना द्रक्ष्यन्ते। तत्रैव कमपि बालकं मम सङ्केतं पृच्छतु स बालकः मदीय एव भविष्यति तथा च स भवन्तं मद्गृहम् प्रापयिष्यति।"

आचार्य-महोदयस्य चैतत् कथनम् अवितथमेव बभूव। कदाऽप्येतत् नाऽभवद् यत् कोऽपि निम्बतरुतले परिक्रीडमानम्बालकम् आचार्यमहोदयस्य गृहसङ्केतम्पृष्टवान् अथ च स बालकः आचार्यमहोदयस्य नाऽभवत्। मन्ये ते आचार्यमहोदयाः पुत्रम् उत्पाद्य तत्रैव निम्बतले क्रीडनाय तम् अत्यजन्।

वस्तुतः साम्प्रतिके युगे यद्दिनात् सीमेण्टजङ्गलानां निर्माणम् प्रारब्धं ततः कालादेव तत्र जङ्गले मानवस्य अन्वेषणं दुष्करमभवत्। नगररूपे च जङ्गले कः कुत्र निवसतीति ज्ञानम् प्राय: असंभवमेव संवर्त्तते अधुना।

अस्माकमेकं मित्रं वर्त्तते यः स्वकीयगृहस्य सङ्केतम् एवं ब्रवीति–"बन्धो! बसस्थानस्य समीपस्थं लघुवर्त्मानं गृहाण। तत्र वर्त्मनि दूरादेव कुतश्चित् कासस्य ध्वनिः श्रुतिपथम् अगमिष्यति। तं कासध्वनिमेवाऽनुसृत्य भवान् तदभिमुखम् आगच्छतु। यदा सा कासध्वनिः भवतः अतिसमीपमागच्छेत् तदा यस्माद् गृहाद् सा ध्वनिरायाति तद्गृहस्य द्वारमागत्य माम् पृच्छतु। तद् गृहम् अस्माकमेव भविष्यति यतो हि तत्र मम श्वश्रूरेव कासमाना द्रक्ष्यते।"

साम्प्रतं तु मनुष्याणाम् आवासः कालोनीषु भवति। कालोनीभवनानि च प्रायः समानाकृतियुक्तानि भवन्ति। यावत् पर्यन्तं गृहाणाम् अङ्कज्ञानं भवते न वर्त्तते तावत् पर्यन्तं तेषाम् अन्वेषणमपि असम्भवम्। एवं विधेषु गृहेषु एका महती न्यूनता इयं भवति यत् प्रत्येकं गृहं स्वगृहम् इव प्रतिभाति।

एकदाऽहमपि एकस्मिन् स्थले कालोनीगृहेषु निवासाऽवसरं प्राप्तवान्। अस्माकम् इयं महती दुर्बलता वर्त्तते यत् गृहस्य अङ्कं शीघ्रमेव विस्मरामि। बहुधा त्विदमभूद् यत् यस्य कस्यचिद् गृहं स्वगृहस्य भ्रान्तिवशात् पूर्वं प्रविष्टवान् पश्चाच्चाऽपमानपूर्वकं तत्स्थैः जनैर्निःसारितः।

एकदा त्वतिविचित्रं सञ्जातम्। मन्ये भवान् एतस्यां घटनायां विश्वासं करिष्यन्ति हास्ये च न ग्रहीष्यन्ति। इदम् अभवद् यदहं कालोनीगृहमेकं समानाकृतिवशादेव निजं गृहं मन्यमानः प्रविवेश। स्वपरिहितानि वस्त्राणि

चाऽवतार्य झटित्येव स्नानागारे प्रविष्टवान्। स्नानागाराच्च निःसृत्य पत्नीं चायम् आनेतुम् आकारितवान्। ततः पश्चात् किम् पश्यामि यत मम पत्न्याः स्थाने काचित् कोमलाङ्गी अतिसुन्दरी गौरवर्णा महिला चायपात्रम् आहृत्य समायाति। तद् दृष्टवा बारम्बारं चक्षूंषि विस्फार्य दृष्टं विचारितं च यत् मम पत्न्याः एतत् परिष्करणं कथम् अभवत्? मनसि चाऽभिलाषः समागतो यत् चायपानात् पूर्वम् एतस्या अधरपानं कुर्यां किन्तु परलोक-नाशभयादेव तूष्णीं स्थितः। किन्तु तत्र तु चायपानमपि परिहृतं देवेन। यतोहि तत्र किञ्चित् कालाऽनन्तरमेव यदा वास्तविकतां ज्ञातवान् तदा मम तथैव पलायनमभवत् यथा गदर्भस्य शिरसः शृङ्गाः।

तत्समयादेव मम इयम् अवस्था सञ्जाता यत् स्वगृहमपि चाऽऽगत्य पूर्वं तु बहिर्द्वारादेव एवम् आवाहयामि–'किम् भो! श्रूयताम् किम् अत्रैव प्रशस्यमित्रः शास्त्री निवसति?'

गृहाऽभ्यन्तराच्च यदा शब्दाः श्रूयन्ते यत्–'एवं खलु, अत्रैव शास्त्रिमहोदया निवसन्ति, किन्तु साम्प्रतं न वर्तन्ते। भवान् किञ्चित् कालं पश्चाद् आगच्छतु।

तदा पुनरहं कथयामि–'अयि श्रीमति! महोदये! श्रूयताम्, अहम् प्रशस्यमित्रः समागतः'–तदा द्वारम् उद्घाटितं भवति।

साम्प्रतं तु अस्माकं निवासः कालोनीगृहे न वर्तते। पुनरपि सौविध्याय भवान् मम एनं निम्नं गृहसङ्केताङ्कम् स्वदैनन्दिनीपत्रके (डायरीपत्रे) अङ्कितम् करोतु–बी-२९, आनन्द नगर (जेल रोड), रायबरेली-(उ०प्र०) इति।।

•

